कविहृदयम्–

# चतुर्विधं जीवनम्

**राजपुत्र चिरं जीव मा जीव मुनिपुङ्गव ।**
**जीव वा मर वा साधो व्याध मा जीव मा मर ।।**

"अये राजपुत्र! भवान् चिरकालम् अस्मिन् लोके जीवतु। यतः इहजीवनेन एव भवतः लाभः।"

"आर्य मुनिवर्य! भवान् यावच्छीघ्रम् इहलोकात् मुक्तिं प्राप्नोतु। यतः परलोके एव भवतः हितम्।"

"साधुपुरुष! भवान् इहलोके वा चिरं जीवतु, परलोकं वा गच्छतु, उभयत्रापि समानं भवतः।"

"अरे व्याध! भवतः जीवनं मरणम् – उभयम् अपि समानम्। न जीवनेन लाभः, न वा मरणेन हानिः।"

कः सन्दर्भः? कः वक्ता? इत्यादिकम् अत्र गौणम्। कश्चित् तत्त्वज्ञानी चतुरः जनान् उद्दिश्य एवं वदति इति भावयामः सद्यःकाले।

ऐहिकभोगसाधनानि, भोगास्पदं सुदृढं शरीरं च राजकुमारस्य सहजम्। इहलोके सः सुखेन जीवितुम् अर्हति। अतः तत्त्वज्ञानी वदति– "राजपुत्र! भवान् चिरं जीवतु" इति। मुनिपुङ्गवः तु निस्पृहः। भोगसाधनानि तस्य दृष्ट्या तृणसमानानि। परलोकगमनेन एव तस्य जीवनस्य सार्थक्यम्। अतः एषः वदति– "यावच्छक्यं तावच्छीघ्रं भवान् परलोकं प्राप्नोतु" इति। सत्कार्यकरणात् सज्जनस्य तु लोके विशिष्टं गौरवम्। सत्कार्यात् पुण्यप्राप्तिः इत्यतः परलोकः अपि हिताय एव। सज्जनः जीवनेनापि धन्यः, मरणेनापि कृतार्थः। अतः तत्त्वज्ञानी वदति– "जीव वा मर वा साधो" इति। दुष्टकार्यकरणात् दुष्टस्य अत्र तु जनतिरस्कारः, तत्कारणात् एव परत्रापि नरकप्राप्तिः। अतः तं वदति एषः– "मा जीव मा मर!" इति।

एवं लोके चतुर्विधं जीवनम्। अनुभोक्तारः अपि वयम् एव। व्यवहारः अपि अस्मदधीनः। सत्फले इच्छा चेत् सद्व्यवहारोऽपि अनिवार्यतया भवेत् एव।

# 'शब्दस्वीकारे गुणग्राहिता

शिष्यः– श्रीमन्, शब्दविषये दुराग्रहः न भवेत् खलु?

आचार्यः– कदापि न भवेत् एव। मया यत् उच्यते तदेव प्रमाणभूतम् इति धारणा सर्वथा अनुचिता। एतादृशे सन्दर्भे अस्माभिः उदारैः भवितव्यम्। चिन्तनपूर्वकं प्रकटितस्य सर्वेषाम् अपि अभिप्रायस्य सदा पुरस्कारः भवेत्।

शि– केचन आज्ञास्वरेण वदन्तः अपि दृश्यन्ते। 'मया यः शब्दः सूच्यते स एव प्रमाणम् इति ते प्रतिपादयन्ति।

आ– पश्यतु, पण्डितेषु द्वैविध्यम्– सहृदयाः तदितरे च इति। सहृदयाः तु युक्तेन प्रयोगेण तुष्यन्ति। युक्तिरहितं प्रयोगं श्रुत्वा तत्क्षणे मन्दहासपूर्वकं मौनं तिष्ठन्ति। अनन्तरकाले युक्ततां बोधयितुं प्रयतन्ते। यतः ते एतस्य क्षेत्रस्य समस्यां विधायकमार्गं च सम्यक् जानन्ति।

एतद्भिन्नानां तु ज्ञानस्य प्रकटने प्रदर्शने च विशेषतात्पर्यम्। एतेषां सूचनायाः पृष्ठतः चिन्तनं स्यात् इति वक्तुं न शक्यते।

शि– कदाचित् एवं भवति। वयं तु अल्पज्ञाः। व्यवहारार्थं तु कश्चन मार्गः अनुसरणीयः एव। अतः परिसरानुगुणं कञ्चन मार्गम् अनुसरामः। तदा केचन आगत्य वदन्ति– "एवं न, एवम् एव। भवदुक्तः शब्दः उचितः न। मया उच्यमानः शब्द एव योग्यः" इति।

आ– सर्वम् अपि विना विरोधं शृणोतु भवान्।

शि– ततः..........?

आ– यदि तेषां वचने सत्यांशः अस्ति तर्हि तत् अवश्यम् अङ्गीकरणीयम्। कस्मिंश्चित् अंशे भवतः विप्रतिपत्तिः अस्ति इत्येव चिन्तयेम, तदापि श्रवणेन न

काऽपि हानिः। तत्काले शृणोत। युक्तायुक्तता परस्तात् चिन्तयत। यदि तथा कर्तुं न शक्नोति तर्हि परिशीलनात् महदयान एतद्विषये पृच्छत।

शि— कदाचित् वयं श्रवणसमनन्तरम् एव ज्ञातुं शक्नुमः यत् एतस्य वचनस्य पृष्ठभूमौ किमपि चिन्तनं नास्ति इति।

आ— तत्रापि मौनम् एव उत्तमम्। यतः वादेन सदीघचर्चया वा तादृशान् समाधातुं न शक्नुमः वयम्। अस्माकं धारणा तु सदा स्यात् भवेत् यत् कस्यापि शब्दस्य विषये व्यामोहः न स्यात्। इतोऽपि उत्तमः सर्वाचीन्तनः शब्दः लब्धः चेत् तं वयम् अङ्गीकर्तुं सिद्धाः एव। अर्वाचिन्त्य सूचनम् अभिप्रायं न पुरस्कुर्मः अपि।

शि— एवं तर्हि इदानीम् अस्माभिः एव अङ्गीकृतः कश्चन शब्दः कालान्तरे पार्श्वे स्थापितः अपि भवेत्।

आ— आम्, तथा भवति कदाचित्। उदाहरणार्थं पश्यत। पूर्वं वयं Home Work इत्यर्थं प्रतिपादयितुं 'गृहकार्यम्' इत्यस्य उपयोगं कुर्मः स्म। तादृशः प्रयोगः प्रान्तीयभाषायां दृष्टः आसीत्। अनन्तरं कदाचित् कश्चित् सूचितवान् —"गृहिणी गृहे यत् कार्यं करोति तदपि गृहकार्यम् एव। अतः विद्यार्थी गृहे यत् करोति तदर्थं गृहपाठः इति शब्दः भवतु" इति। वयम् एतत् अङ्गीकृतवन्तः। इतोऽपि उत्तमं कश्चित् सूचयेत् तर्हि तदपि अङ्गीक्रियते एव।

चाकलेट् पदार्थं सूचयितुम् इदानीं 'चाकलेहः' इति शब्दः तात्पूर्तिकतया उपयुज्यते। 'चक— तृप्तौ' 'लिह— आस्वादने' इति धातुद्वयस्य उपयोगेन कश्चित् चाकलेहशब्दस्य व्युत्पत्तिं सम्पादितवान्। अत्र पूर्णतः तृप्तिः अस्ति इति न। तथापि तस्य शब्दस्य उपयोगः गत्यन्तराभावात् क्रियते। उत्तमः शब्दः अन्यः प्राप्तः चेत् एतं त्यजेम। अथवा एषः एव शब्दः कदाचित् कालान्तरे स्थिरीकृतः अपि भवेत्।

शि— एवं तर्हि शब्दस्वीकारे गुणग्राहिता स्यात्। कस्यापि शब्दस्य विषये व्यामोहः न स्यात्। उत्तमस्य शब्दस्य स्वीकारे सर्वदा अस्माकं मनः सिद्धं स्यात्।

आ— आम्, एषा एव हितकरी दृष्टिः।



# चन्दमामा

जुलै - १९८७

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००




# चन्दमामा

सम्पादकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

'तां व्यक्तिम् अहं जानामि भोः' 'तत् सङ्घटनम् अहं न जानामि वा?' इत्यादीनि वाक्यानि लोके तदा तदा श्रूयन्ते। वयम् अपि एतादृशानि वाक्यानि उच्चरितवन्तः स्याम। यस्य (पुरुषस्य संघटनस्य वा)विषये एतादृशं भावं प्रकटीकुर्मः तं वयं किं सम्यक् जानीमः? सकृद्दर्शनेन सकृच्छ्रवणेन वा कस्यापि पूर्णपरिचयः न भवति। तथापि वयं तदीयं सम्पूर्णं स्वरूपं जानन्तः इव वदामः– "तम् अहं जानामि भोः" इति।

बाह्यं स्वरूपं यथा दृश्यत तथैव न भवति अन्तरङ्गम्। परिसरानुगुणं कालानुगुणं सन्दर्भानुगुणं च बाह्यस्वरूपं भिद्यति। परमार्थतः योग्यतानिर्णये अन्तरङ्गम् एव प्रमाणम्। अतः अन्तरङ्गं स्पष्टतः अज्ञात्वा कार्यस्य एकं मुखं दृष्ट्वा मौल्यमापनं यत् क्रियते तत् सर्वथा अनुचितम्।

संस्कृतज्ञैः अस्माभिः उदारैभिः भाव्यम्। संस्कृतार्थं या काऽपि व्यक्तिः संस्था वा कार्यं करोति चेत् तस्याः विषये अस्माकम् आदरः सदा भवेत्। तया (व्यक्त्या संस्थया वा) अस्मदभिप्रेतः कार्यमार्गः अनुसृतः न स्यात्। तथापि सा संस्कृतोन्नत्यै एव कार्यं करोति इति अंशः न विस्मरणीयः। सुभाषितेषु उक्ता, अस्माभिः तदा तदा उदाह्रियमाणा च उदारता अस्माकं व्यवहारे अपि अन्विता भवेत्।

सम्पुटः –४ जुलै–८७ सञ्चिका – ४

प्रतिकृतिमूल्यं रू. २–५० वार्षिकं ग्राहकशुल्कं रू. ३०–००

CHITRA

रसप्रश्नाः

# श्रीरामः रघुकुले जातः

(वाल्मीकिरामायणम् आधारीकृत्य दशरथस्य शासनतः आरभ्य रामजननपर्यन्तं स्थितस्य कथाभागस्य विषये अधः केचन प्रश्नाः प्रस्तुताः सन्ति। । समुचितम् उत्तरं सूचयन्तु।)

१. इक्ष्वाकुवंशस्य मूलपुरुषः कः?
२. अयोध्या कस्य देशस्य राजधानी?
३. अयोध्यानगरीं कः निर्मापितवान्?
४. दशरथः कस्य पुत्रः?
५. दशरथस्य कति मन्त्रिणः आसन्, येषु सुमन्त्रः अपि अन्यतमः?
६. दशरथस्य आस्थानपुरोहितयोः नाम किम्?
७. कौसल्यादेव्याः पितुः नाम किम्?
८. सुमित्रादेव्याः पिता शूरराजः कस्य देशस्य अधिपतिः?
९. केकयदेशीयायाः कैकेय्याः पितुः नाम किम्?
१०. ऋष्यशृङ्गः कस्य जामाता?
११. ऋष्य शृङ्गस्य आगमनकारणतः कस्मिन् देशे वृष्टिः आगता?
१२. अश्वमेधयागः पुत्रकामेष्टियागः च कस्याः नद्याः तीरे प्रवृत्तौ?
१३. यज्ञवेदिकातः आगतः कः दशरथाय पायसं दत्तवान्?
१४. सुमित्रया पायसस्य कतमः भागः प्राप्तः?
१५. रामस्य जन्म कस्यां तिथौ अभवत्?

उत्तराणि—

१. वैवस्वतः मनुः। २. कोसलदेशस्य।
३. मनुचक्रवर्ती। ४. अजमहाराजस्य। ५. अष्ट। ६. वसिष्ठः वामदेवः च।
७. भानुमान्।
८. मगधदेशस्य। ९. अश्वपतिः। १०. रोमपादः।
११. अङ्गदेशे। १२. सरयूनद्याः।
१३. प्राजापत्यः नरः। १४. ३/८ भागः।
१५. चैत्रशुक्लनवम्याम्।

# रसवार्ताः



## वायुविहारी धूमशकटः

मुम्बयीनगरस्य अन्ताराष्ट्रिय- राष्ट्रिय-विमानस्थानकयोः मध्ये २०० आसनयुतः वायौ सञ्चरणे समर्थः च धूमशकटः सद्यः एव सञ्चरिष्यति। अयस्कान्त-(मेग्नेटिक्) शक्त्याः आधारेण एषः शकटः उड्डयनं करोति।

## भयङ्करः प्राणी



स्काट्लेण्ड्देशे यथा लोच् नेन् मान्सटर् प्रसिद्धः तथैव एषु दिनेषु चीनादेशे अल्टायपर्वतप्रदेशस्थे तटाके दृश्यमानः अश्वग्रहणसमर्थः कश्चन भयङ्करः प्राणी प्रसिद्धिं गतः अस्ति। एषः प्राणी असाधारणा कारकः रक्तवर्णीयः साल्मन्मीनः स्यात् इति विज्ञानवेत्तारः अभिप्रयन्ति।



## भाषणे अद्वितीयः!

कडलूरुप्रदेशीयः ५७ वर्षीयः जयरामन् महोदयः १६५ घण्टाः यावत् निरन्तरं भाषणं कृत्वा नूतनं विक्रमं साधितवान् अस्ति।

## शतायुष्काः!




जपानदेशे शतायुष्काः वृद्धाः १,८५१ सन्ति। एकवर्षाभ्यन्तरे एषा सङ्ख्या द्विसहस्रतां प्राप्स्यति। एतेषु सर्वज्येष्ठत्वं कस्याश्चित् स्त्रियः। १८७६ तमे वर्षे एप्रिल् मासे जातायाः एतस्याः वयः इदानीं ११० वर्षाणि।

# भृगुमहर्षिः

कदाचित् मुनीनां मध्ये जिज्ञासा उत्पन्ना यत् त्रिमूर्तिषु ब्रह्म–विष्णु–महेश्वरेषु कः श्रेष्ठः इति। एतस्य परिहारे ब्रह्मणः मानसः पुत्रः भृगुमहर्षिः एव समर्थः इति ते चिन्तितवन्तः। भृगुसमीपं गत्वा स्वजिज्ञासां निवेदितवन्तः च। मुनीनां जिज्ञासायाः उपशमनभारम् अङ्गीकृत्य भृगुः त्रिमूर्तिसमीपं गतवान्।

प्रथमं सः ब्रह्मलोकं गतवान्। तत्र सरस्वती वीणावादनरता आसीत्। ब्रह्मा नेत्रे निमील्य निरन्तरं सृष्टिकार्यं कुर्वन् भृगुमहर्षेः आगमनं न ज्ञातवान् एव। कुपितः भृगुः ब्रह्माणं शप्त्वा कैलासं प्रति प्रस्थितवान्।

कैलासे नृत्यमग्नौ शिवः पार्वती च भृगोः आगमनं न ज्ञातवन्तौ। कोपोद्रिक्तः भृगुः शिवम् अपि शप्त्वा वैकुण्ठं गतवान्।

वैकुण्ठे विष्णुः शेषशय्यायां योगनिद्रामग्नः आसीत्।'मादृशं भक्ताग्रेसरम् अपि एषः न पश्यति किल? कर्तव्यं विस्मृत्य निद्रां करोति किल?' इति चिन्तयन् भृगुः कोपेन विष्णोः वक्षःस्थले पादप्रहारं दत्तवान्।

विष्णुः तत्क्षणे एव जागरूकतां प्राप्य –"कठिनस्य मम वक्षःस्थलस्य स्पर्शात् भवतः कोमलौ पादौ अतीव पीडितौ स्यातां किल?" इति वदन् भृगोः पादमर्दनं कर्तुम् आरब्धवान्।

भृगुः लज्जाम् अनुभवन् विष्णोः क्षमां प्रार्थितवान्। विष्णुः मन्दहासपूर्वकम् उक्तवान् यत् भवतः पादचिह्नं मम वक्षःस्थले श्रीवत्सचिह्नरूपेण सदा तिष्ठतु इति।

भक्तविधेयत्वस्य आदरणीयस्य प्रतीकरूपेण विष्णोः वक्षःस्थले श्रीवत्सचिह्नं राराजते।

सन्तृप्तः भृगुमुनिः मुनीनां समीपम् आगत्य–"महाविष्णुः एव सर्वोत्तमः,सः कल्पवृक्षः" इति उक्तवान्।





# स्वरूपनिश्चयः

पूर्वं कस्मिंश्चित् ग्रामे उमाशङ्करः नाम महाकविः आसीत्। तस्य वैशिष्ट्यं यत् सः स्वकवित्वबलात् धनं सम्पादयितुं न इच्छति स्म। पित्रार्जितां सम्पत्तिम् एव जागरूकतया उपयुज्य स्वकीयान् चतुरः पुत्रान् पोषितवान्। तस्य पत्नी पार्वती अपि मितव्ययेन गृहकार्याणि निर्वर्तयति। अतः सः निश्चिन्ततया एव जीवनं यापितवान्।

इदानीम् उमाशङ्करस्य ज्येष्ठः पुत्रः न्यायाधीशस्य साहाय्यकपदव्यां नियुक्तः अस्ति। न्यायशास्त्रस्य सर्वे सूक्ष्मांशाः तेन ज्ञाताः सन्ति इति जनाः वदन्ति स्म।

उमाशङ्करस्य कनिष्ठः पुत्रः गोपीनाथः। सः समीचीनतया विद्याभ्यासं कृतवान् एव। तथापि कस्मिंश्चित् विषये अपि न निपुणः।

एकदा राजसभायाः द्वयोः नर्तक्योः मध्ये स्पर्धा उत्पन्ना। तयोः का श्रेष्ठा इति निर्णेतुं कोऽपि पण्डितः समर्थः न जातः।

तदा जनानां मध्यतः गोपीनाथः उत्थाय अग्रे आगत्य– "नर्तक्योः मध्ये का श्रेष्ठा इति विचार्य निर्णयकथनेन तयोः तृप्तिः जायेत। किन्तु एकस्याः श्रेष्ठतायाः निर्णयेन अन्यस्याः खेदः। उभयोः कृते अपि समानपुरस्कारदानेन उभयोः अपि तृप्तिः। तेन नाट्यकलायाः अपि प्रोत्साहः दत्तः भवति" इति उक्तवान्।

राजा गोपीनाथस्य प्रस्तावं तत्क्षणे एव अङ्गीकृतवान्। सः नर्तक्योः कृते अमूल्यानि उपायनानि दत्त्वा तयोः नाट्यप्रावीण्यं प्रशंस्य प्रेषितवान्। श्रेष्ठतानिर्णयविचारं सर्वथा त्यक्तवान्।

अनन्तरं राजा गोपीनाथम् आहूय– "भवतः विवेचनाशक्तिः अपूर्वा। युक्ते समये युक्तं निर्णयं स्वीकर्तुं शक्नोति अपि। इतःपरं भवान् मम आन्तरङ्गिक–

"विवेकः"



साहाय्यकः भवतु। एतत् अनुमतं वा भवता" इति पृष्टवान्।

तदा गोपीनाथः विनयेन– "प्रभो! भवतः आन्तरङ्गिकसाहाय्यकः भवितुम् अहं न अर्हामि। यतः तावान् अनुभवः मम नास्ति। अतः एवं भवतु यत् इतरे यत् सूचयन्ति तस्य युक्तायुक्ततां विचार्य अहं सूचयिष्यामि। मां क्षाम्यतु कृपया" इति निवेदितवान्।

राजा एतत् अङ्गीकृतवान्। अनन्तरम् अल्पे काले एव गोपीनाथः 'मनुष्याणां शक्तिसामर्थ्यनिर्णये समर्थः' इति कीर्तिं प्राप्तवान्।

एकदा गोपीनाथः विपण्यां गच्छन् आसीत्। तत्र सः अधिकमूल्येन विक्रयणं कुर्वन्तम् एकं, न्यूनमूल्येन विक्रमणं कुर्वन्तम् अपरं च दृष्टवान्। तत्समये गोपीनाथेन सह स्थितः स्नेहितः पृष्टवान्– "एतयोः मध्ये भवान् कम् अधिकतया इच्छति?" इति।

तदा गोपीनाथः उक्तवान्– "न्यूनमूल्येन यः विक्रयणं करोति तम् एव अहम् इच्छामि" इति।

"यः अल्पमूल्येन विक्रयणं करोति तदीयवस्तुषु अर्धात् अधिकं निष्प्रयोजकम् एव। अतः अधिकमूल्येन यः विक्रीणीते तस्य सकाशात् क्रयणम् एव उचितं किल? यतः सः उत्तमानां वस्तूनां एव विक्रयणं करोति" इति उक्तवान् गोपीनाथस्य स्नेहितः।

"भवता उक्तं सत्यम् एव। किन्तु वाणिज्यस्य तत्त्वं यत् जनाकर्षणम् अधिकतया करणीयम् इति। जनाः अपि वस्तूनां योग्यतां विशेषतः न पश्यन्ति, अपि तु न्यूनमूल्यताम्। एतां वस्तुस्थितिं जानन् यः वाणिज्यं करोति स एव उत्तमः वणिक्। अधिकानां ग्राहकाणम् उपस्थितिः एव न्यूनमूल्येण विक्रयणं कुर्वतः जनाकर्षण-शक्तिं 'प्रदर्शयति" इति उक्तवान् गोपीनाथः।

स्नेहितः गोपीनाथस्य विवेचनशक्तिम् अभिनन्दितवान्। गोपीनाथेन सह तदीयं गृहम् आगतवान् अपि। गृहसदस्यैः सह सम्भाषणसमये सः उक्तवान्– "अन्येषां योग्यतानिर्णये गोपीनाथः असदृशं पाण्डित्यं प्रदर्शयति। व्यवस्थितचिन्तने गोपीनाथ

सदृशः अन्यः नास्ति एव। सः एतत् कौशलं कथं सम्पादितवान्, केन वा तन्त्रेण एवम् योग्यं निर्णयं स्वीकरोति इति तु भगवान् एव जानाति" इति।

तत्समये उमाशङ्करस्य जामातारौ सपत्नीकौ तत्र उपस्थितौ आस्ताम्। अनन्तरदिने उत्सवः आसीत् इति कारणतः ते सर्वे उपस्थिताः आसन्। गृहे सर्वत्र सन्तोषस्य वातावरणम् आसीत्।

गोपीनाथस्य अग्रजा रमादेवी गोपीनाथम् उक्तवती– "अन्येषां जनानां योग्यतानिर्णयं भवान् बहुधा करोति, सत्यम्। किन्तु गृहसदस्यानां योग्यतानिर्णयं कदापि भवान् न श्रावितवान् एव। वयं सर्वे कीदृशाः इति वदतु नाम" इति।

"तत्र कः क्लेशः? यदि भवन्तः इच्छन्ति तर्हि अहं तु वक्तुं सिद्धः" इति उक्तवान् गोपीनाथः।

गृहसदस्यानाम् अनुमत्यनन्तरं गोपीनाथः आवुत्तयोः श्रेष्ठतायाः प्रशंसां कृतवान्। ये धनिककुले उत्पन्नाः भवन्ति ते सामान्यतः विद्याभ्यासेषु अश्रद्धालवः भवन्ति। तारुण्ये येषां हस्ते धनं भवति ते सामान्यतः दुर्व्यसनानां दासाः भवन्ति। किन्तु एतौ आवुत्तौ तु श्रद्धया विद्याभ्यासं कृतवन्तौ, दुर्व्यसनानां समीपम् अपि न गतवन्तौ। अतः गोपीनाथेन तयोः प्रशंसनं यत् कृतं तत्र कोऽपि असहजतां न दृष्टवान्।

अनन्तरं गोपीनाथः भ्रातरं दृष्ट्वा उक्तवान्– "न्यायाधीशस्य सहायकत्वं नाम असिधाराव्रतम् इव। न्यायनिर्णयः युक्तः जातः चेत् कीर्तिः न्यायाधीशस्य





भवति। यदि दोषपूर्णः भवेत् तर्हि तत्र अपराधः साहाय्यकस्य भवति । अतः सहायकः कदापि कीर्तिं सम्पादयितुम् अवकाशं न प्राप्नोति। तथापि भवान् कार्यदक्षः इति कीर्तिं सम्पादितवान्। एतत् भवतः व्यवहारकौशलं प्रदर्शयति'' इति।

ज्येष्ठभगिनीं लक्ष्मीं पश्यन् सः उक्तवान्– ''बाल्यतः आरभ्य भवती पाके मातुः साहाय्यं कृतवती। तेनैव सह वस्त्रैः पाञ्चालिकानिर्माणं, कटनिर्माणम् इत्यादिकम् अपि कुर्वती भवती बहूनि जीवनोपयोगीनि कार्याणि ज्ञातवती। एवं बहूनां विषयाणाम् अध्ययने भवती आत्मानं योजयित्वा सफलतां प्राप्तवती इत्येव भवत्याः विशेषः'' इति।

''समीचीनम्। मम विषये वदतु तावत्'' इति उक्तवती गोपीनाथस्य अपरा अग्रजा रमा।

''भवती सङ्गीते एतावत् प्रावीण्यं प्राप्तवती इति तु विशेषः एव'' इति उक्तवान् गोपीनाथः।

''तत्र किं भोः। मम सङ्गीतज्ञानं सामान्यम्। सङ्गीते काऽपि पदवी न सम्पादिता मया। माम् उपहसति भवान्'' इति खेदपूर्णस्वरेण उक्तवती रमा।

गोपीनाथः हसन्– ''भगिनि! अन्यथाभावः मास्तु। भवती गोपीवल्लभ-शास्त्रिणां सकाशात् एतावत् सङ्गीतम् अधीतवती इति तु महान् विशेषः। पदवी न प्राप्ता चेदपि सङ्गीतज्ञानं भवत्याः न न्यूनम्'' इति उक्तवान्। तदा सर्वे हसितवन्तः।

गोपीवल्लभशास्त्री सङ्गीतविद्वान् इति तु सत्यम्। किन्तु स्वसदृशः शिष्यः तेन एकोऽपि न निर्मितः। शिष्येषु दिग्भ्रान्तिम् जनयन् भीतिम् उत्पादयति स्म सः। अतः 'गोपीवल्लभशास्त्रितः अध्ययनं न शक्यम्' इति भावना सर्वत्र प्रसृता आसीत्।

''मातुः विषये वदतु किञ्चित्'' इति उक्तवान् गोपीनाथस्य अग्रजः।

''अस्मान् सर्वान् एतावत्पर्यन्तम् अव्याजप्रीत्या पालितवती इति तु अपूर्वः विषयः। पितुः सम्पादनं विशेषतः न

आसीत्। तथापि एषा मितव्ययेन व्यवहरन्ती विद्यमानैः एव अस्माकं कुटुम्बरथम् अग्रे आनीतवती। असदृशी अस्मदीया माता" इति उक्तवान गोपीनाथः।

गोपीनाथस्य वचनं श्रुत्वा माता पार्वती लज्जाम् अनुभवन्ती– "पितुः विषये अपि किञ्चित् वदतु" इति उक्तवती।

'पुत्रः मम विषये किं वदेत्?' इति कुतूहलेन आसीत् उमाशङ्करः। किन्तु गोपीनाथः झटिति उक्तवान् यत् पितुः विषये किमपि वक्तुं न शक्नोमि इति।

तत् श्रुत्वा खिन्नः उमाशङ्करः झटिति ततः उत्थाय गतवान्। पत्युः मनसः अस्वास्थ्यं दृष्ट्वा पार्वती अपि तम् अनुसृतवती।

"किमर्थम् एवं मध्ये उत्थाय आगतम्?" इति पतिं पृष्टवती पार्वती।

तदा उमाशङ्करः खेदेन उक्तवान्– "अहं सर्वविधेन अपि असमर्थः। पित्रार्जिता सम्पत्तिः आसीत् इति कारणतः पुत्राः प्रवृद्धाः। भवती पुत्राणां हिताहितं दृष्टवती। मम पात्रम् अत्र किमपि नास्ति। इदानीम् अपि पुत्राणां सम्पादनेन कुटुम्बनिर्वहणं प्रचलति। अहं निष्प्रयोजकः सन् अत्र निवसामि। मम विषये गौरवम् उत्पादयितुं भवती अपि किमपि न कृतवती" इति।

एतत् श्रुतवत्याः पार्वत्याः मनः म्लानम्। सा सान्त्वनस्वरेण उक्तवती– "सः विनोदार्थं किमपि उक्तवान्। भवान् तदेव गाम्भीर्येण स्वीकृतवान् किल? भवान् एवं मध्ये उत्थाय आगतवान् इति ते खेदं न



अनुभवेयुः वा?" इति।

एवं पतिं सान्त्वयित्वा सा पत्या सह तस्मात् प्रकोष्ठात् बहिः आगतवती। पुत्राः यत्र सन्ति तस्य प्रकोष्ठस्य द्वारस्य पार्श्वे तौ स्थितवन्तौ। यतः अन्तः गोपीनाथः पितुः विषये एव वदन् आसीत्।

गोपीनाथः उक्तवान् –"अग्रज! पितुः विषये किमपि वक्तुं किमर्थं न शक्नोति इति भवतः प्रश्नः उचितः एव। भवद्भिः सर्वैः सह मम सहवासः अधिकः। भवतः सर्वान् सम्यक् जानामि अहम्। अतः मम अभिप्रायम् उक्तवान्। किन्तु पितुः विषये तथा नास्ति। यतः पितुः कवित्वश्रेष्ठतायाः इयत्तां अहं इतोऽपि न जानामि। विशेषसम्पत्तौ अविद्यमानायाम् अपि तेन क्रियमाणस्य दानस्य तत्त्वं ज्ञातुं न शक्नोमि। कवित्वं धनसम्पादनार्थं न उपयोक्तव्यम् इति धारणायाः स्वरूपं ज्ञातुं न शक्नोमि। तस्य बुद्धिमत्तां व्यवहारप्रौढतां च सर्वथा ज्ञातुं न शक्नोमि। तस्य सहवासतः बहून् सद्गुणान् सम्पादितवान्। तस्य गुणावगुणं निर्णेतुम् इयत्तां निश्चेतुं वा अहं सर्वथा न शक्नोमि। अपूर्वः पिता क्व? अल्पः अहं क्व?" इति।

एतत् वचनं श्रुतवतः उमाशङ्करस्य नेत्राभ्याम् अश्रूणि आगतानि। सः प्रकोष्टं प्रविश्य गोपीनाथम् आलिङ्ग्य– "भवदुक्ताः गुणाः मयि सन्ति वा न वा इति अहं न जानामि। भवादृशं पुत्रं प्राप्तवान् इत्यतः अहम् आत्मानं धन्यं मन्ये" इति उक्तवान्।

गोपीनाथः पितरं श्रद्धया नमस्कृत्य– "मयि यदि गुणाः स्युः तर्हि तत्र भवतः सहवासः एव कारणम्। भवान् अस्माकं मार्गदर्शकत्वेन अस्ति इति कारणतः एव अत्र सर्वाणि कार्याणि सुव्यवस्थितं प्रचलन्ति। भवतः सान्निध्यतः वयं निश्चिन्ताः स्मः" इति उक्तवान्।

उमाशङ्करस्य मनःखेदः अपगतः। सर्वे एतेन, प्रसङ्गेन अतीव सन्तुष्टाः। अनन्तरदिने उत्सवः वैभवेन सन्तोषेण च प्रवृत्तः।






# वज्रस्वीकारः

किशोरवर्ममहाराजः गोवर्धनगिरिं पालयन् आसीत्। तस्य पुत्री मनोरमा। हेमपुरयुवराजाय जयसेनाय मनोरमा दातव्या इति निश्चयः जातः।

विवाहसन्दर्भे राजकुमार्यै दातुं किशोरवर्मा अतिमनोहरं कण्ठहारं कारयितुं निश्चितवान्। हारः सिद्धः अपि। किन्तु हारस्य मध्ये स्थापनार्थं योग्यं वज्रं केवलं न लब्धम्।

बहवः प्रसिद्धाः वज्रवणिजः आगत्य राजकुमार्यै मनोरमायै स्वसमीपे स्थितानि वज्राणि प्रदर्शितवन्तः। किन्तु तेषु एकम् अपि राजकुमार्यै न अरोचत। एवं स्थिते काञ्चनपुरतः धनगुप्तः इति, चन्दनपुरतः चन्द्रचूडः इति, चामीरपुरतः नागदत्तः इति च त्रयः वज्रप्रदर्शनार्थं राजधानीम् आगतवन्तः।

प्रथमं धनगुप्तः मनोरमासमीपं गत्वा नमस्कृत्य स्वसमीपस्थानि वज्राणि प्रदर्शितवान्। तानि क्षणकालं दृष्ट्वा मनोरमा उक्तवती– "सर्वाणि उत्तमानि एव। मम हारार्थं किं वज्रं युज्येत इति निर्णेतुम् एव न शक्नोमि" इति।

तदा धनगुप्तः तेषु एकं स्वीकृत्य– "एतत् वज्रं भवत्याः हारार्थं युज्यते" इति उक्तवान्।

तदा मनोरमा कोपेन– "वज्रचयनं मम कार्यम्। मम उपदेशकः भवान् कः?" इति उक्त्वा असमाधानेन ततः उत्थाय गतवती।

अनन्तरं चन्द्रचूडः अन्तः आगत्य स्वसमीपस्थानि वज्राणि स्थालिकायां स्थापयित्वा प्रदर्शितवान्। तानि दृष्ट्वा आश्चर्यचकिता मनोरमा– "अहो! अपूर्वाणि वज्राणि एतानि! एतेषु कीदृशम् एकं स्वीकरोमि इत्येव निर्णेतुं न शक्नोमि" इति उक्तवती।

चन्द्रचूड: एकं वज्रम् उन्नीय प्रदर्शयन्– "एतत् वज्रं स्वीकरोति चेत् भवत्याः हारस्य शोभा वर्धते" इति उक्तवान्।

मनोरमा कोपेन– "मया खलु वज्रचयनं करणीयम्? मध्ये भवत: कोऽयं प्रवेश:?" इति वदन्ती ततः उत्थाय गतवती।

अनन्तरं नागवर्मा अन्तः आगत्य– "युवराज्ञीनिमित्तं वज्राणि आनीतवान् अस्मि। किन्तु उत्तमस्य चयनभारं राजकुमार्याः उपरि एव आरोपयन् अस्मि। एतदर्थं क्षन्तव्यः अयं जनः" इति विनयेन उक्तवान्।

युवराज्ञी सर्वाणि वज्राणि परीक्ष्य एकं स्वीकृत्य तृप्त्या– "एतत् एव मम हारार्थं योग्यं वज्रम्" इति उक्तवती।

नागदत्तः वज्रस्य योग्यं मूल्यं, 'योग्यं वज्रम् आनीय दत्तवान्' इति महाराजतः प्रशंसां च प्राप्तवान्।

नागदत्तः यदा राजभवनतः बहिः आगतवान् तदा धनगुप्तः चन्द्रचूडः च पृष्टवन्तौ– "वयं बहूनि अमूल्यानि वज्राणि नीत्वा प्रदर्शितवन्तः। तथापि राजकुमारीं तर्पयितुं वयं न शक्तवन्तः। किन्तु भवान् तां कथं तर्पयितुं शक्तवान्? अत्र किं रहस्यम्?" इति।

"भवन्तः प्रायः अमूल्यानि वज्राणि बहूनि प्रदर्शितवन्तः स्युः। तदा किं स्वीकरणीयम् इति अजानती राजकुमारी व्यामुग्धा जाता स्यात्" इति उक्तवान् नागदत्तः।

"भवतः वचन सत्यम् एव। यदा सा व्यामुग्धा तदा वयम् एव उत्तमम् एकं प्रदर्शितवन्तः। तेन सा कुपिता अभवत्" इति उक्तवन्तौ तौ।

"अत्रैव भवतां दोषः जातः। तादृशानां पुरतः अस्माभिः निर्णयः कदापि न वक्तव्यः। अहं तु एकम् उत्तमं वज्रं स्वीकृत्य सामान्यानां वज्राणां मध्ये स्थापयित्वा राजकुमार्यै प्रदर्शितवान्। सा विनायासम् उत्तमं वज्रम् एव स्वीकृतवती। तृप्ता अभवत् च" इति उक्तवान् नागदत्तः।





# ज्वालाद्वीपः

## १३

(चित्रसेनः राज्ये स्थितान् लुण्ठकान् स्वचातुर्येण सन्मार्गं आनीतवान्। अत्रान्तरे कान्तिमती पुत्रं प्रसूतवती। सः पुत्रः यदा पञ्चवर्षीयः जातः तदा उग्राक्षः राजधान्याम् उपस्थितः अभवत्। चित्रसेनेन दत्तः बालकः राजकुमारः न इति मार्गे ज्ञातवान् उग्राक्षः। सः कोपेन ज्वलन् राजधानीं प्रति प्रस्थितवान्। तदनन्तरम्...)

**बा**लकं स्वीकृत्य कोपेन आगच्छन्तम् उग्राक्षं दृष्ट्वा भीतः अमरपालः धावन् चित्रसेनसमीपम् आगत्य उक्तवान्– "महाराज! राक्षसः उग्राक्षः भूमिं कम्पयन् हूंकुर्वन् गर्जन् कोपेन आगच्छन् अस्ति" इति।

तत् श्रुत्वा चित्रसेनः आश्चर्यचकितः दिग्भ्रान्तः च। भीतायाः राज्ञ्याः कान्तिमत्याः शरीरे कम्पनम् उत्पन्नम्। 'राक्षसः किमपि अकार्यं कुर्यात्' इति दास्यः भीताः अभवन्।

"एवं तर्हि तस्य बालकस्य कुलशीलादिकं राक्षसेन ज्ञातम् एव! अन्यथा सः किमर्थं वा प्रत्यागच्छेत्? सन्तोषेण गतः सः कोपेन प्रत्यागच्छन् अस्ति। कथम् एतं सम्मुखी–करोमि?" इति सम्भ्रान्तस्वरेण उक्तवान् चित्रसेनः।

"कथमपि सः रहस्यं ज्ञातवान् एव। एतं



मायाविनं वञ्चयितुं न शक्यते इत्येव भासते'' इति उक्तवान् अमरपालः। तस्य स्वरः अपि कम्पते स्म।

'भवता सत्यम् एव उक्तम्' इति उक्त्वा चित्रसेनः कान्तिमतीं पश्यन्– ''इतःपरं चिन्तनेन किमपि प्रयोजनं नास्ति। यदा पुत्रदानं प्रतिज्ञातम् आसीत् तदा मया न ज्ञातं यत् अग्रिमस्थितिः एवं घोरा भवेत् इति। राक्षसः सः न मायावी। तस्य बुद्धिः एतावत्सूक्ष्मा स्यादिति वयं न ज्ञातवन्तः, तावदेव'' इति उक्तवान्।

''येन केनापि उपायेन तस्य हननं कृतं चेत् किं भवेत्? यतः राक्षसजातीयस्य तस्य सहवासः कालान्तरे वा अपायकरः एव'' इति उक्तवान् अमरपालः।

''तस्य हननं क्लेशाय न भवेत्। किन्तु तथा कृतं चेत् मम एव अपकीर्तिः खलु? मम अन्तरङ्गम् अपि सदा मां द्रोहिणं वदेत्। प्रजासु मद्विषये अश्रद्धा यदि उत्पद्येत तर्हि देशे अराजकता उत्पन्ना भवेत्। एतत्सर्वम् अहं सर्वथा न इच्छामि'' इति उक्तवान् चित्रसेनः।

तदा राज्ञी कान्तिमती आसनात् उत्थाय– ''महाराज! तस्य राक्षसस्य व्यवहारम् अहं पश्यामि। भवतां तद्विषये चिन्ता मास्तु'' इति उक्त्वा स्वप्रकोष्ठं प्रति गतवती।

अत्रान्तरे उग्राक्षः राजप्रासादं प्रविशन्– ''अये महाराज! भोः महाराज! आगच्छतु अत्र'' इति उच्चैः आक्रोशनं कृतवान्।

तं शब्दं श्रुत्वा चित्रसेनः अमरपालः च अट्टात् अवतीर्य वेगेन प्राङ्गणम् आगतवन्तौ।

चित्रसेनः उग्राक्षं दृष्ट्वा मन्दहासं प्रकटयन्– ''किं जातम् उग्राक्ष? वयं सर्वे भवद्विषये वार्तालापं कुर्वन्तः आस्म'' इति उक्तवान्।

''कीदृशी वञ्चना एषा भोः? भवान् वचनदानं विस्मृत्य एवं वञ्चनां कुर्यात् इति मम तु निरीक्षा न आसीत्। एषः भवतः पुत्रः एव न'' इति वदन् उग्राक्षः स्कन्धे स्थितं बालम् अवतारितवान्।

"उग्राक्ष! शान्तः भवतु। राजकुमारं प्रेषयितुम् उद्युक्ताः दास्यः आजागरूकतया मन्त्रिकुमारं भवते दत्तवन्तः। एषः विषयः अस्माभिः अपि इदानीं ज्ञातः। तद्विषये एव वार्तालापं कुर्वन्तः आस्म अपि" इति उक्तवान् अमरपालः।

"एषः मन्त्रिकुमारः वा! अहो हो" इति उच्चैः हसितवान् उग्राक्षः।

तं बालम् अनायासेन उन्नीय- "एषः न मन्त्रिकुमारः, न वा सेनापतिपुत्रः, अपि तु पाचकपुत्रः। अहं तु चित्रसेनमहाराजस्य प्रथमसन्तानम् इच्छामि। तत् स्थाने समग्रं राज्यं दत्तं चेदपि न स्वीकरोमि। एतत्सर्वं मया पूर्वम् एव उक्तम् आसीत्। महाराजेन तत् अङ्गीकृतम् आसीत् अपि" इति शान्तस्वरेण एव उक्तवान् उग्राक्षः।

"आम्। एतद्विषये स्पष्टः वार्तालापः तु प्रवृत्तः एव। इदानीं किञ्चित् तिष्ठतु। वेषभूषादिकं धारयित्वा बालम् अत्र आनयन्ति" इति सान्त्वनस्वरेण उक्तवान् चित्रसेनः।

क्षणाभ्यन्तरे दास्यः उत्तमैः वेषैः आभरणैः च अलङ्कृतं बालं तत्र आनीतवत्यः। उग्राक्षः क्षणकालं बालं दासीः च एकदृष्ट्या दृष्टवान्। "मातरः! इदानीम् अपि राजकुमारे आनेतव्ये अजागरूकतया अन्यः न आनीतः खलु? भवतीषु किम् अहं विश्वासं स्थापयामि?" इति दासीः पृष्टवान् सः।




"यदि भवतः इतोऽपि संशयः, तर्हि एतं बालकम् एव पृच्छतु" इति उक्तवत्यः दास्यः।

अत्रान्तरे कार्यव्याजेन चित्रसेनः अन्तः गतवान्। उग्राक्षः बालकसमीपं गत्वा तम् उन्नीय– "पुत्र! भवतः नाम किम्?" इति पृष्टवान्।

"युवराजः" इति उक्तवान् बालकः।

दास्यः उच्चैः हसन्त्यः उग्राक्षं पृष्टवत्यः – "भोः, नाम्नः प्रश्नेन कुलगोत्रादिकं कथं ज्ञायेत? पितुः नामवृत्त्यादिकं किल प्रष्टव्यम्?" इति।

"मां वञ्चयितुम् इच्छन्त्यः भवत्यः तादृशानाम् उत्तराणि पाठितवत्यः स्युः। अतः तथा प्रश्नेन अपि प्रयोजनं नास्ति। एषः



राजकुमारः वा न वा इति ज्ञातुम् अन्या एव परीक्षा आयोज्यते मया। तेन वस्तुस्थितिः ज्ञायते। यदि एतत्सन्दर्भे अपि भवत्यः मां वञ्चितवत्यः स्युः तर्हि भवतीः सर्वाः नीत्वा राक्षसेभ्यः दास्यामि। तदा भवतीभिः तेषां पत्नीभिः भूत्वा अरण्ये कष्टमयं जीवनं यापनीयं भवेत्। स्मरन्तु '' इति उक्तवान् उग्राक्षः।

उग्राक्षस्य वचनं श्रुत्वा काश्चन दास्यः हसितवत्यः। काश्चन भीताः च। उग्राक्षः हुँ कुर्वन् बालकं स्कन्धे आरोप्य वेगेन अरण्यम् उद्दिश्य गतवान्।

किञ्चिद्दूरं गमनानन्तरं 'बालकः वस्तुतः राजकुमारः वा न वा' इति परीक्षितुम् इष्टवान् उग्राक्षः।

तत्रत्यम् एकं दण्डम् उन्नीय बालकाय यच्छन्–''पुत्र! एतेन दण्डेन भवान् किं करोति?'' इति पृष्टवान्।

''एतेन अहं किं करोमि? एतं दण्डं मम पितुः हस्ते ददामि'' इति उक्तवान् सः बालः।

एतत् उत्तरं श्रुत्वा उग्राक्षः चिन्तितवान् यत् इदानीम् अपि तैः वञ्चना कृता इति। अतः सः बालं पुनः पृष्टवान् –''भवतः पिता एतेन दण्डेन किं करोति?'' इति।

''समूहतः कोऽपि अजः यदि दूरं गच्छेत् तर्हि तम् एतेन दण्डेन ताडयन् सम्यक् दण्डयति'' इति सहजस्वरेण उक्तवान् बालकः।

''अये वराक! भवान् अजपालस्य पुत्रः वा! कीदृशी वञ्चना एषा! अजपालपुत्रं राजकुमारः इति उक्त्वा मह्यं दत्तवन्तः किल?'' इति वदन् उग्राक्षः कोपेन ज्वलन् हुँकुर्वन् च पुनः अपि कपिलपुरदुर्गम् उद्दिश्य प्रस्थितवान्।

अरण्यम् अतीत्य उग्राक्षः यदा दुर्गसमीपस्थम् अङ्गणं प्राप्तवान् तदा सः दृष्टवान् यत् केचन अश्वारोहिणः सैनिकाः दुर्गस्य पुरतः स्थिताः सन्ति। 'चित्रसेनः मया सह युद्धं कर्तुम् एतान् सैनिकान् न प्रेषितवान् स्यात् किल?' इति सन्देहः उत्पन्नः तस्य मनसि।

यदा उग्राक्षः समीपम् आगतवान् तदा राजभटानां पुरतः स्थितः अमरपालः किञ्चित् अग्रे आगतवान्। तेन सह उत्तमैः वस्त्रैः विभूषितः तेजस्वी बालकः अपि

आसीत्। एषः एव वास्तविकः राजकुमारः इति चिन्तितवान् उग्राक्षः।

यदा उग्राक्षः पुरतः आगतवान् तदा अमरपालः —" अये राक्षसेन्द्र! एषः राजकुमारः। द्वितीयवारम् अपि अस्मत्परतः दोषः संवृत्तः। वात्सल्यम् एवं कारयति। अन्यथा न चिन्तयतु भवान्" इति उक्तवान्।

"मां सुलभतया वञ्चयितुं शक्यते इति चिन्तितवन्तः खलु भवन्तः?" इति तिरस्कारपूर्णस्वरेण उक्त्वा उग्राक्षः दास्यः इव भवान् अपि मां न वञ्चयति किल?" इति पृष्टवान्।

"किं भोः, परीक्ष्य वदतु। एषः चित्रसेनस्य पुत्रः युवराजः एव। किमर्थं सदा संशयः?" इति कोपमिश्रितस्वरेण उग्राक्षम् उक्तवान् अमरपालः।

उग्राक्षः पुनः अपि परीक्ष्य 'बालकः राजकुमारः एव' इति निश्चित्य "किमर्थं भवन्तः माम् एवम् आयासयन्तः स्वयम् अपि आयासम् अनुभूतवन्तः? प्रथमवारम् एव राजकुमारः दत्तः चेत् सर्वं समीचीनम् अभविष्यत किल?" इति पृष्टवान्।

"भवान् राक्षसकुलोत्पन्नः। हृदय–वात्सल्यं भवान् न जानाति। अन्तःपुरे राज्ञी मूर्च्छां गता अस्ति। चित्रसेनमहाराजः शयनप्रकोष्ठे मौनं रोदिति। दास्यः निरन्तरम् अश्रूणि स्रावयन्ति। महाराजेन अविचार्य वचनं यत् दत्तं तस्य परिणामः एषः। सर्वेषां दुःखस्य गभीरतां भवान् ज्ञातुं न शक्नोति। अस्तु नाम, अस्माकम् दुःखस्य




निवेदनेन किं प्रयोजनम्? भवतः इष्टं तु सिद्धं किल?" इति उक्तवान् अमरपालः।

"आम् आम्" इति वदन् उग्राक्षः राजकुमारं स्कन्धे आरोप्य गच्छन् —"पुनः कदाचित् आगत्य चित्रसेनमहाराजस्य दर्शनं अवश्यं प्राप्नोमि" इति उक्त्वा ततः निर्गतवान्।

"राजकुमारस्य कोऽपि क्लेशः यथा न भवेत् तथा जागरूकतया रक्षणं करणीयम्। एतस्य पोषणविषये जागरूकतया भवतु" इति उच्चस्वरेण उग्राक्षम् उक्तवान् अमरपालः।

एतत् श्रुत्वा उग्राक्षः क्षणकालं स्थित्वा पृष्ठतः पश्यन् —"अद्य आरभ्य एषः चित्रसेनमहाराजस्य पुत्रः राजकुमारः न।



ते उग्राक्षं राजकुमारं च दृष्ट्वा 'जयतु जयतु' इति जयघोषं कृतवन्तः।

उग्राक्षः सेवकान् समीपम् आहूय — "एषः अस्माकं भाविनायकः। एतस्य नाम उग्रदत्तः" इति सूचितवान्।

"उग्रदत्तकुमारः जयतात्" इति सर्वे जयघोषं कृतवन्तः। घोषणं शृण्वन् उग्राक्षः दुर्गस्य अन्तः गतवान्। समीचीनतया अलङ्कृते कस्मिंश्चित् प्रकोष्ठे तं बालम् अवतार्य— "प्रिय उग्रदत्त! एषः प्रकोष्ठः भवतः। भवता सह क्रीडनार्थम् इतोऽपि द्वौ बालकौ सद्यः एव आनेष्यामि" इति सूचितवान्।

अनन्तरं चतुरः सहचरप्रमुखान् आहूय —"भवन्तः इदानीम् एव इतः प्रस्थाय उग्रदत्तसमानवयस्कं बालकद्वयम् आनयन्तु। किन्तु एतत् कार्यं रहसि प्रचलतु। ग्रामात् बालकौ अपहृतौ इति चित्रसेनमहाराजेन कथम् अपि न ज्ञायेत। जागरूकाः भवन्तु। गच्छन्तु इदानीम्" इति सूचितवान्।

"एवं तर्हि एतत् कार्यं रात्रौ कृतं चेत् समीचीनं भवेत्" इति सूचनां दत्तवान् तेषु एकः।

"तथैव भवतु। किन्तु रात्रौ अन्धकारः भवति किल। अतः अज्ञात्वा अन्धः पङ्गुः वा न आनेतव्यः। एतद्विषये विशेषजागरूकता भवतु। यस्मात् गृहात् बालम् आनयन्ति तस्मिन् गृहे स्यूतमितानि सुवर्णनाणकानि स्थापयन्तु। तेन तेषां पालकानां दुःखं शान्तं भवेत्" इति उक्त्वा तेषां हस्ते सुवर्णनाणकानां स्यूतद्वयं दत्तवान्।

अपि तु राक्षसराजस्य उग्राक्षस्य मम पुत्रः उग्रदत्तः। स्मरन्तु एतत्" इति उक्त्वा हुँकुर्वन् अग्रे गतवान्।

अमितेन उत्साहेन पदानि स्थापयन् उग्राक्षः अरण्यं प्रविष्टवान्।

मार्गे सः स्कन्धे स्थितं बालम् उक्तवान् —"वत्स! इतः परं भवान् मम पुत्रः। भवतः नाम उग्रदत्तः इति। एषः अरण्यप्रदेशः भवदीयः एव। भवतः सेवार्थं कटिबद्धाः आज्ञापालकाः शतशः सेवकाः अत्र दुर्गे सन्ति" इति।

उग्राक्षः दुर्गसमीपम् आगतवान्। राक्षसानुचराः हस्तौ बद्ध्वा परिवारेण सह विनयेन दुर्गस्य पुरतः पङ्क्तिरूपेण स्थितवन्तः आसन्।

कानिचन दिनानि अतीतानि। एकदा प्रातः काले उग्राक्षः उग्रदत्तेन सह दुर्गस्य पुरतः क्रीडायां मग्नः आसीत्। तदा ते चत्वारः राक्षसानुचराः गायन्तः नृत्यन्तः च धावन्तः तत्र आगतवन्तः। तेषां हस्ते उग्रदत्तवयस्कौ बालौ आस्ताम्।

तौ बालौ दृष्ट्वा उग्रदत्तः सन्तोषेण उत्प्लवनं कृतवान्। किन्तु तौ बालौ तु राक्षसानां तत्परिसरस्य च दर्शनेन भीतौ कम्पमानौ मन्दं रोदनं कुरुतः।

उग्राक्षः सहचरान् पृष्टवान् –"अन्यः कोऽपि यथा न जानीयात् तथा आनीतौ किल एतौ?" इति।

"न कोऽपि दृष्टवान् महाराज। ग्रामात् बहिः स्थितस्य कासारस्य पार्श्वे स्थितात् गृहात् एतौ आनीतौ। तत्समये तत्र अन्यः कोऽपि न आसीत्। भवता दत्तं सुवर्णस्यूतद्वयं तयोः गृहयोः अन्तः स्थापयित्वा आगतवन्तौ" इति उक्तवन्तः ते राक्षसानुचराः।

अत्रान्तरे नूतनयोः तयोः बालकयोः रोदनम् अधिकं जातम्। तौ उच्चस्वरेण रोदनम् आरब्धवन्तौ। तत् श्रुत्वा उग्रदत्तः अपि उच्चैः रोदनम् आरब्धवान्।

उग्राक्षः त्रयाणाम् अपि रोदनं स्थगयितुं प्रयत्नं कुर्वन् स्वसहचरान् उक्तवान् –"एतान् बालकान् उद्यानं नयन्तु। तत्र व्याघ्रभल्लूकादीनां शिशवः सन्ति खलु। तान् एतेभ्यः प्रदर्शयन्तु। कथञ्चित् रोदनं स्थगितं भवतु। एते यावत् प्राप्तवयस्काः न भवन्ति तावत् एतेषाम् वसतिः अत्र इति कोऽपि न जानीयात्। समीपस्थाः ग्रामवासिनः अरण्यसञ्चारिणः वा सर्वथा न जानीयुः। अतः एतेषां पालनविषये विशेषजागरूकता भवतु" इति।

राक्षसानुचराः तत्क्षणे एव तान् त्रीन् बालकान् उन्नीय उद्यानं नीतवन्तः। तत्र व्याघ्रभल्लूकादीनां क्रूरप्राणिनां शिशवः परस्परं क्रीडायां मग्नाः आसन्। तान् दृष्टवतां तेषां त्रयाणां बालकानाम् अपि रोदनं स्थगितम् अभवत्। ते कुतूहलेन आश्चर्येण च तेषां व्याघ्रादिशिशूनां क्रीडनं द्रष्टुम् आरब्धवन्तः।

(अनुवर्तते)






# देवतातुल्यः चोरः

स्कन्धात् अवतीर्णः वेतालः श्मशाने एव तिष्ठति इति जानन् त्रिविक्रमः साक्षात् श्मशानं गतवान्। शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। मौनं श्मशानाभिमुखं प्रस्थितवान् च।

तदा शवान्तर्गतः वेतालः अवदत् –"अये राजन्! अस्मिन् अर्धरात्रसमये येन भवता हंसतूलिकातल्पे शयनं करणीयम् आसीत् सः भवान् सुखमयीं निद्रां विहाय किमर्थम् एवं भीतिजनके श्मशाने भ्रमति इति तु अहम् अपि न जानामि। ललितादित्यमहाराजः इव भवान् अपि दुष्टेन शत्रुणा दुष्टया प्रजया वा आक्रान्तः स्यात् वा इति मम संशयः। भवान् अपकीर्त्या ग्रस्तः तु न स्यात् किल? यः राजा भवति सः विवेकी पौरुषशाली च भवेत्। यादृशी वा परिस्थितिः आगच्छतु नाम, कदापि राज्ञा स्वगुणाः न परित्यक्तव्याः। पूर्वोक्तं गुणद्वयं यदि न स्यात् तर्हि सः राजा अपि स्थानच्युतः भवेत्। उदाहरणरूपेण ललितादित्यराजस्य कथां विस्तरेण श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा–

लक्ष्मणपुरस्य शासकः ललितादित्यः. सः कदाचित् चिन्तितवान् यत् स्वजन्मदिनसन्दर्भे तादृशाय विशेष–पारितोषिकं दातव्यं यश्च अधिकांशानां प्रजानां अभिमानपात्रभूतः अस्ति इति। सर्वजनप्रियां व्यक्तिम् अन्वेष्टुं समर्थान् चारान् तद्दिने एव चतसृषु दिक्षु प्रेषितवान्।

एकं मासं यावत् राज्ये सर्वत्र अटित्वा चाराः प्रत्यागतवन्तः। सर्वेषाम् अभिप्रायसङ्ग्रहणेन ज्ञातं यत् जनानाम् आदरपात्रभूतः कश्चन महाचोरः, तस्य नाम गणेशः इति। कश्चन चोरः महाराजापेक्षया अपि अधिकां जनप्रियतां प्राप्तवान् किल? इति आश्चर्यम् अनुभूतवान् राजा। गणेशस्य महाचोरत्वं राजा जानाति एव।

चाराणां वार्ताश्रवणानन्तरं राजा मन्त्रिणं कमलेश्वरम् उक्तवान्– "सः क्रूरी गणेशः चौर्यम्, अनेकेषां हननं, लुण्ठनम् इत्यादिकं कृतवान् इति सर्वे जानन्ति। यः तं सजीवं गृहीत्वा आनेष्यति, यो वा तस्य कर्तितं शिरः आनीय प्रदर्शयति तस्मै लक्षं सुवर्णनाणकानि दीयन्ते इति उद्घोषणम् अपि कृतम् अस्ति किल?" इति।

तदा मन्त्री उक्तवान् –"आं महाराज! भवदुक्तं सत्यम् एव। तथापि सः जनप्रियतां सम्पाद्य बन्धनात् आत्मानं रक्षन् अस्ति" इति।

"एतस्य कारणम् अपि इदानीं ज्ञातं किल? जनाः एव तस्य सहकारिणः सन्ति। राजद्रोहिणः मरणदण्डनार्हस्य चोरस्य साहाय्यं कुर्वन्तः सन्ति पौराः। अतः एते अपि राजद्रोहिणः। एते सर्वे अपि दण्डनार्हाः भवन्ति" इति असमाधानेन उक्तवान् ललितादित्यराजः।

मन्त्री क्षणकालम् आलोच्य उक्तवान् – "अविचार्य कोऽपि निर्णयः न स्वीकरणीयः। पौरेषु कीदृशाः जनाः तस्य गणेशस्य प्रोत्साहं कुर्वन्तः सन्ति इति ज्ञातव्यम्। एतस्य प्रोत्साहस्य किं कारणम् इत्यपि ज्ञातव्यम् । अनन्तरकाले एव अग्रिमनिर्णयः। एवम् अकृत्वा सहसा पौराः दण्ड्यन्ते चेत् अस्माकं शासनस्य एव अपायः भवेत्। न केवलं राज्ये, अपि तु अन्यदेशेषु अपि अस्माकं महत् अवमाननं



भवेत्। इतः परं देवः प्रमाणम्" इति।

मन्त्रिणः सूचनानुसारं गणेशेन प्राथमाणस्य जनादरस्य कारणं ज्ञातुम् इच्छन् महाराजः वेषान्तरं धृत्वा मन्त्रिणा सह देशसञ्चारार्थं गतवान्।

तौ उभौ अपि राज्यस्य विविधप्रान्तेषु सञ्चरन्तौ गणेशस्य विषये जनाभिप्रायं सङ्ग्रहीतुम् आरब्धवन्तौ। सर्वे पौराः वदन्ति स्म यत् गणेशः देवतातुल्यः पुरुषः इति। किन्तु कोऽपि तस्य कार्यस्वरूपं वा वसतिस्थानं वा न वदति।

"गणेशस्य वसत्यादिविषये वयं किमपि न जानीमः। सः परोपकारी देवतातुल्यः च। देवः इव तदा तदा प्रत्यक्षं भवति इत्येतावदेव जानीमः" इति उत्तरम् आसीत् सर्वेषाम्।

एकदा मन्त्री राजा च कस्याञ्चित् धर्मशालायां स्थितौ आस्ताम्। तदा लोकनाथनामकस्य परिचयः जातः। तौ तम् उक्तवन्तौ – "आवां विदेशात् आगतवन्तौ। यः गणेशं सजीवं गृहीत्वा आनयति तस्मै भवतां महाराजः लक्षं सुवर्णनाणकानि दास्यति इति श्रुतम्। तस्य बन्धनं कृत्वा कथञ्चित् पारितोषिकं प्राप्तव्यम् इति आशया आवाम् अत्र आगतवन्तौ। किन्तु अत्र सर्वेऽपि तं देवतातुल्यं कथयन्ति किल। किं एतत् विचित्रम्" इति।

तत् श्रुत्वा लोकनाथः उच्चैः हसन् उक्तवान्–" गणेशस्य विषये प्रजानाम् आदरं दृष्ट्वा अपि भवन्तौ विवेकं न प्राप्तवन्तौ किल। कीदृशी मुग्धता भवतोः" इति

एतत् श्रुत्वा ललितादित्यः कोपेन – "चोराय आश्रयं दत्त्वा एतद्देशीयाः पौराः तं देवतातुल्यम् अपि यत् भावयन्ति तेन ज्ञायते यत् अत्रत्यानां नैतिकं पतनं कीदृशम् अस्ति इति।

भवतां राजा सज्जनः इत्यतः सर्वं समीचीनम् अस्ति। इतरदेशेषु पौरणाम् एतादृशी धारणा यदि स्यात् तर्हि ते निश्चयेन राजद्रोहकारणेन दण्डिताः अभविष्यन्" इति उक्तवान्।

लोकनाथः महाराजं तदेकदृष्ट्या अपश्यन्




उक्तवान् – "भवन्तौ: एतस्यदेशस्य महाराजस्य समीचीनं परिचयं यदि प्राप्तवन्तौ स्यातां तर्हि गणेशः वस्तुतः चोरः एव न इति अवदिष्यताम्" इति।

एतस्य उत्तरूपेण महाराजः कोपेन किमपि वक्तुम् उद्युक्तः। अत्रान्तरे मन्त्री नेत्रसूचनया एव शान्तं मौनं च स्थातुं महाराजं सूचितवान्। लोकनाथमुखतः गणेशसम्बन्धीनि रहस्यानि ज्ञातुं शक्यन्ते इति मन्त्रिणः विश्वासः आसीत्।

सः लोकनाथम् उक्तवान् – "क्षाम्यतु महोदय! गणेशविषयकं प्रजानाम् आदरं जानन् अपि मम स्नेहितः असमाधानेन व्यवहृतवान्। मम तु अत्र इतोऽपि कश्चन संशयः अस्ति। गणेशः चोरः एव न इति राजापेक्षया उत्तमः इति च प्रजाः किमर्थं मन्यन्ते इति तु मया अद्यापि न ज्ञातम्। 'राजा करादिस्वीकरणेन प्रजाः लुण्ठतयति' इति भावः अत्र किमर्थं दृश्यते इत्यपि न ज्ञातम् एव। यतः सर्वे राजानः प्रजाभ्यः करादिकं सङ्गृह्णन्ति एव" इति।

लोकनाथः क्षणकालस्य मौनानन्तरम् उक्तवान् – "वस्तुस्थितिः तु एवम् अस्ति – निर्धन–धनिकभेदं विना राजा सर्वेभ्यः समानतया करादिकं बलात्कारेण सङ्गृह्णाति। किन्तु सङ्गृहीते धने एकं नाणकम् अपि प्रजाहिताय न व्ययीकरोति। गणेशः तथा न। अव्यवहारेण धनिकाः ये जाताः तान् केवलं लुण्ठयति। एवं प्राप्तं धनं निर्धनेभ्यः असहायेभ्यः च वितरति। स्वनिमित्तं किमपि न स्थापयति। एतस्य साहाय्येन एव बहूनाम् उद्धारः जातः। एवं जनोपकारकं तं जनाः देवतातुल्यं भावयन्ति चेत् तत्र को वा दोषः?" इति।

तदा मन्त्री मन्दहासपूर्वकम् उक्तवान् "भवता यत् उच्यते तत् तथ्यम् एव स्यात्। किंप्रमाणकं करादिकं सङ्ग्रहणीयं, सङ्गृहीतं कथं व्ययीकरणीयम् इत्यादिकस्य निर्णेता राजा एव खलु? एवं स्थिते एतद्व्यवहारे गणेशः मध्ये प्रवेशं कृतवान्। अराजकतां सृष्टवान्। महाराजस्य विषये अन्यथाभावं प्रसारितवान्। अधिकारस्य स्वहस्ते स्वीकारः सर्वदा दोषाय एव। एषः एव गणेशः अग्रे कदाचित् सिंहासनवशीकरणार्थं प्रयत्नं न कुर्यात् इत्यत्र कः विश्वासः?

जनाभिप्रायः तु तदनुकूलः अस्ति एव'' इति।

तदा लोकनाथः शिरश्चालनपूर्वकं तत् निराकुर्वन् –''गणेशस्य तादृशः दुरुद्देशः सर्वथा नास्ति। अपेक्षाम् अतिरिच्य अधिकतया करसङ्ग्रहः लुण्ठनम् इव भवति । एतावदेव न, राजा आस्थाननर्तक्य अपार धनव्ययेन एकं भवनं निर्मापितवान् आत्मनः निमित्तं शीतकाले वासार्थम् एकं महाभवनं, ग्रीष्मकालीनवासार्थम् अपरं भवनं च निर्मापितवान् अस्ति सः। एतत् सर्वं स्वार्थाय एव न वा? प्रजाहितार्थं राजा एकम् अपि कार्यं न करोति। प्रजानाम् अपेक्षां ज्ञातुम् अपि तस्य इच्छा नास्ति। अतः एव प्रजाः राजानं लुण्ठकं मन्यन्ते, चोरं गणेशं देवतुल्यं मन्यन्ते'' इति उक्तवान्।



एतत् सर्वं श्रुत्वा राजा क्षणकालं शिरः अवनमय्य मौनं स्थितवान्। अनन्तरं लोकनाथम् उक्तवान् च–'' भवान् चोरस्य गणेशस्य विषये बहून् अंशान् सूचितवान्। एतादृशस्य बन्धनेन पारितोषिकं प्राप्तव्यम् इति अस्माकं या इच्छा आसीत् तदर्थं लज्जाम् अनुभवामः'' इति।

अनन्तरं राजा मन्त्री च ततः प्रस्थाय राजधानीम् आगतवन्तौ।

अनन्तरदिने मन्त्री कमलेश्वरः ललितादित्यं दृष्ट्वा उक्तवान्–''महाप्रभो, ह्यः धर्मशालायाम् आवाभ्यां सह सुदीर्घवार्तालापं यः कृतवान् सः लोकनाथः न अन्यः। स्वयं चोरः गणेशः एव। लोकनाथनाम्ना आगतवान् आसीत् सः। तत्समये एतस्य विषयस्य निवेदनम् उचितं न भवेत् इति चिन्तयन् तद न निवेदितवान्। क्षाम्यतु माम्'' इति।

ललितादित्यराजः मन्त्रिणः वचनं श्रुत्वा मन्दहासपूर्वकम् उक्तवान् –'' ह्यः दृष्टः न लोकनाथः, अपि तु चोरः गणेशः एव इति अहम् अपि ज्ञातवान् एव। एतद्विषये भवता क्षमा याचनीया नास्ति'' इति।

अनन्तरम् अल्पेषु एव दिनेषु ललितादित्यः शासनक्रमे परिवर्तनम् आनीतवान्। अक्रमेण धनं सम्पादयतः राजोद्योगिनः कारागारे स्थापितवान्।

ये वणिजः उत्कोचं दत्त्वा स्वकार्यं साधयन्तः आसन् तान् अपि कठोरतया दण्डितवान्।

अनन्तरं समर्थानां चाराणां द्वारा प्रजानाम् अपेक्षां सम्यक् ज्ञात्वा तदनुगुणं कार्याणि आरब्धवान्। अर्थबलानुगुणं नूतनानि प्रजाहितकार्याणि कुर्वन् 'उत्तमः राजा' इति कीर्तिं सम्पादितवान्।

अनन्तरकाले पूर्वं यः प्रजानाम् आदरं सम्पादितवान् आसीत् तस्य चोरगणेशस्य का गतिः जाता, सः कुत्र गतः इति कोऽपि न जानाति स्म।

वेतालः एवं कथां समाप्य अवदत् –"राजन्, लोकनाथनाम्ना चोरः गणेशः यदा सम्मुखम् आगतः आसीत् तदा महाराजेन सः बन्धने स्थापनीयः आसीत् खलु? अथवा यदि गणेशस्य गुणाः महाराजस्य इष्टकराः तर्हि सम्मान्नीयः वा आसीत्। तदपि न कृतवान् राजा। महाराजः किं कार्याकार्यविवेकं न जानाति? तस्य व्यवहारस्य कः अर्थः एतत् सर्वं जानन् अपि भवनं उचितम् उत्तरं यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा राजा त्रिविक्रमः एव उत्तरं दत्तवान् –"गणेशस्य वचनानां श्रवणेन राजा ज्ञातवान् यत् स्वकीयं शासनं कियत् अतृप्तिकरम् अस्ति इति। सः वस्तुस्थितिं ज्ञात्वा हृदयेन अङ्गीकृतवान् अपि। गणेशस्य बन्धनेन तद्विषयकः आदरभावः प्रजासु वर्धते। तथैव एतेन कुपिताः पौराः प्रबलतया विरोधम् आचरेयुः अपि। सम्मानेन तु गणेशस्य कीर्तिः वर्धते एव यच्च अनिष्टकरम् इत्यपि राजा चिन्तितवान्। 'भ्रष्टानाम् अधिकारिणां कारणतः एव स्वशासनं हीनावस्थां प्राप्नोत्' इति आलोचितवान्। अतः सः प्रथमं एतं दोषं समीकृतवान्। अनन्तरं प्रजाहितकार्येषु विशेषावधानं स्थापितवान्। तेन महाराजेन यथा चिन्तितं तथैव प्रवृत्तम्। महाराजस्य कीर्तिः दिने दिने प्रवृद्धा। जनाः क्रमशः गणेशं विस्मृतवन्तः अपि। एतस्य सर्वस्य परिशीलनेन ज्ञायते यत् राजा न पौरुषहीनः, न वा अविवेकी, अपितु विशेषचतुरः इति" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः शवसहितम् आदृश्यः भूत्वा यथापूर्वं शाखाम् अवलम्बितवान्।





# मौनव्रतभङ्गः

पूर्वं स्रवन्तीराज्यं कल्याणवर्मा नाम महाराजः पालयति स्म। तस्य शोभावती नाम एका पुत्री सा जगदेकसुन्दरी।

एतां स्नुषात्वेन स्वीकर्तुं बहवः राजानः इच्छन्ति स्म। केचन तु दूतद्वारा एताम् इच्छां कल्याणवर्मणे निवेदितवन्तः आसन् अपि। विवाहविषये पुत्र्याः निर्णयः एव अन्तिमः इति तेभ्यः वार्ता प्रेषितवान् आसीत् कल्याणवर्मा।

शोभावती यदा कमपि राजकुमारं न इष्टवती तदा राजा पुत्रीं पृष्टवान् – "वत्से, भवती कीदृशं परिणेतुम् इच्छति? स्पस्टं वदतु" इति।

"मां यः परिणयेत् सः साहसी बुद्धिमान् चतुरः च भवेत्" इति उक्तवती राजकुमारी।

"एतेषां गुणानां परीक्षणार्थं कः उपायः आश्रयणीयः?" इति पुत्रीं पृष्टवान् कल्याणवर्मा।

"तदर्थम् अपि एकः उपायः चिन्तितः अस्ति मया। अहं मौनव्रतम् अवलम्ब्य तिष्ठामि। यः स्वबुद्धिमत्तया मम मौनं भञ्जयति, यदि तस्य साहसगुणः प्रसिद्धः च, तर्हि अहं तं परिणेष्यामि" इति उक्तवती शोभावती।

कल्याणवर्मा पुत्र्याः वचनैः सन्तुष्टः अभवत्। सः तद्दिने एव सर्वत्र पुत्र्याः विवाहनियमम् सडिण्डिमघोषम् उद्घोषितवान्।

राजकुमारीं परिणेतुम् इच्छन्तः बहवः राजकुमाराः मौनव्रतं भञ्जयितुं बहुधा प्रयत्नं कृतवन्तः। किन्तु अन्ते पराजयम् अङ्गीकृत्य प्रतिगतवन्तः च।

एतस्मिन् एव समये हेमन्तपुरस्य राजकुमारः आनन्दवर्धनः देशाटनं कुर्वन् स्रवन्तीपुरम् आगतवान्। तत्र सः शोभावत्याः विवाहनियमम् श्रुतवान्। शोभावती महाबुद्धिमती जगदेकसुन्दरी च इति आनन्दवर्धनः जानाति एव। तस्याः परिणये एतस्य अपि इच्छा जाता। अतः सः

"अनामिका"

योग्यम् उपायं निश्चित्य राजभवनं गतवान्।

महाराजस्य दर्शनं प्राप्य आत्मनः परिचयं निवेद्य –"शोभावत्याः मौनभङ्गार्थम् आगतवान् अस्मि" इति उक्तवान् सः। आनन्दवर्धनस्य शौर्यसाहसादिकं तावता एव सर्वत्र प्रसिद्धम् आसीत्। तत् स्मरन् कल्याणवर्मा उत्साहेन तं पुत्र्याः समीपं नीतवान्।

शोभावतीं दृष्ट्वा आनन्दवर्धनः–"अये एषा एव मम पत्नी" इति उद्गारं प्रकटितवान्।

तत् श्रुत्वा महाराजः कल्याणवर्मा, तत्र स्थिताः अन्ये च आश्चर्यचकिताः।

तदा आनन्दवर्धनः महाराजम् उक्तवान्– "महाराज! केभ्यश्चित् दिनेभ्यः पूर्वम् अहं देवालयसमीपे एतां चोरेभ्यः रक्षितवान्। तदा मम उपकारं कृतज्ञतापूर्वकम् अभिनन्दितवती एषा। परस्परानुरागकारणतः अहम् एतस्याः हस्तं गृहीतवान्। गान्धर्वविधिना आवयोः विवाहः तदा एव जातः अपि। आवश्यकं चेत् एताम् एव पृच्छतु भवान्" इति।

महाराजः प्रश्नार्थकदृष्ट्या पुत्र्याः मुखं दृष्टवान्। किन्तु मौनव्रतकारणतः शोभावती किमपि न उक्तवती।

तस्याः मौनं दृष्ट्वा आनन्दवर्धनः पुनः उक्तवान् – "महाराज! सा लज्जाकारणतः किमपि वक्तुं न शक्नोति। 'मौनं सम्मतिलक्षणम्' इति भवान् जानाति एव। अचिरात् एव भवतीं नेष्यामि इति एताम् उक्तवान् आसम् अहम्। अतः आगतः अस्मि। इदानीम् एतां मया सह प्रेषयतु भवान्" इति।

एतत् वचनं श्रुत्वा अतीव कुपिता शोभावती "एषः असत्यं वदति। एतस्मिन् मा विश्वसितु" इति उच्चैः उक्तवती।

अनायासेन तस्याः मौनभङ्गः जातः आसीत्। अतः आनन्दवर्धनः सन्तोषेण हसितवान्। आनन्दवर्धनस्य बुद्धिमत्तां दृष्ट्वा कल्याणवर्मा अतीव सन्तुष्टः।

शोभावती मन्दहासं प्रकटयन्ती मुखम् अवनमय्य स्थितवती। अनन्तरं शुभे मुहूर्ते आनन्दवर्धन– शोभावत्योः विवाहः सवैभवं सम्पन्नः।



कविहृदयम्–

# चतुर्विधं जीवनम्

**राजपुत्र चिरं जीव मा जीव मुनिपुङ्गव ।**
**जीव वा मर वा साधो व्याध मा जीव मा मर ।।**

"अये राजपुत्र! भवान् चिरकालम् अस्मिन् लोके जीवतु। यतः इहजीवनेन एव भवतः लाभः।"

"आर्य मुनिवर्य! भवान् यावच्छीघ्रम् इहलोकात् मुक्तिं प्राप्नोतु। यतः परलोके एव भवतः हितम्।"

"साधुपुरुष! भवान् इहलोके वा चिरं जीवतु, परलोकं वा गच्छतु, उभयत्रापि समानं भवतः।"

"अरे व्याध! भवतः जीवनं मरणम् – उभयम् अपि समानम्। न जीवनेन लाभः, न वा मरणेन हानिः।"

कः सन्दर्भः? कः वक्ता? इत्यादिकम् अत्र गौणम्। कश्चित् तत्त्वज्ञानी चतुरः जनान् उद्दिश्य एवं वदति इति भावयामः सद्यःकाले।

ऐहिकभोगसाधनानि, भोगास्पदं सुदृढं शरीरं च राजकुमारस्य सहजम्। इहलोके सः सुखेन जीवितुम् अर्हति। अतः तत्त्वज्ञानी वदति– "राजपुत्र! भवान् चिरं जीवतु" इति। मुनिपुङ्गवः तु निस्पृहः। भोगसाधनानि तस्य दृष्ट्या तृणसमानानि। परलोकगमनेन एव तस्य जीवनस्य सार्थक्यम्। अतः एषः वदति– "यावच्छक्यं तावच्छीघ्रं भवान् परलोकं प्राप्नोतु" इति। सत्कार्यकरणात् सज्जनस्य तु लोके विशिष्टं गौरवम्। सत्कार्यात् पुण्यप्राप्तिः इत्यतः परलोकः अपि हिताय एव। सज्जनः जीवनेनापि धन्यः, मरणेनापि कृतार्थः। अतः तत्त्वज्ञानी वदति– "जीव वा मर वा साधो" इति। दुष्टकार्यकरणात् दुष्टस्य अत्र तु जनतिरस्कारः, तत्कारणात् एव परत्रापि नरकप्राप्तिः। अतः तं वदति एषः– "मा जीव मा मर!" इति।

एवं लोके चतुर्विधं जीवनम्। अनुभोक्तारः अपि वयम् एव। व्यवहारः अपि अस्मदधीनः। सत्फले इच्छा चेत् सद्व्यवहारोऽपि अनिवार्यतया भवेत् एव।



पूर्वं कदाचित् आनन्दकोन् नामकः गोपालकः पर्वते पशुचारणसमये कस्याञ्चित् गुहायां स्थितं धननिक्षेपं दृष्टवान्। सः झटिति स्वसहचरान् इतरान् अपि तत्र नीतवान्। तत् धनं स्वगृहं नीतवान् च।

केषुचित् एव दिनेषु सः परितः स्थितान् प्रदेशान् आक्रम्य आत्मनः शासकत्वम् उद्घोषितवान्। तत्रत्येषु त्रिषु दुर्गेषु अन्यतमस्य राजगिरेः उपरि उत्तमं भवनं निर्मापितवान् च।





शत्रुभिः सुलभतया गन्तुम् असाध्ये स्थले एतत् दुर्गं निर्मितम् आसीत्। भवनं परितः अगाधा परिखा निर्मापिता अस्ति। परिखाम् अतिक्रम्य गन्तुं वृक्षमयी सेतुः निर्मिताः अस्ति। अपेक्षिते समये एतां सेतुम् अपसारयितुम् अपि शक्यते।

जिञ्जीशासकाः अन्यान्यराजानां चक्रवर्तिनां च माण्डलिकाः आसन्। नायकराजानां काले एतत् दुर्गम् अतीव बलसम्पन्नं जातम्। तथापि तेषु एव दिनेषु बिजापुरशासकस्य सैनिकाः एतत् दुर्गम् आक्रम्य नायकराजं जित्वा २० कोटि रूप्यकाणि वशीकृत्य गतवन्तः।






अनन्तरकाले महाराष्ट्रस्य शासकः छत्रपतिः शिवाजी महाराजः कर्णाटक-दण्डयात्रासन्दर्भे एतत् दुर्गं वशीकृतवान्। शिवाजी मरणानन्तरं मोगलशासकाः एतस्य दुर्गस्य उपरि आक्रमणं कृतवन्तः। किन्तु ते सुलभतया एतत् दुर्गं वशीकर्तुं न शक्तवन्तः।

यदा मोगलचक्रवर्ती अर्काट्शासकाय जिञ्जीदुर्गं वशीकर्तुम् आदिष्टवान् तदा तत् दुर्गं द्वाविंशतिवर्षीयः देशिंग् परिपालयन् आसीत्। युद्धं प्रति प्रस्थानतः पूर्वं देशिंग्राजः समीपस्थं रङ्गनाथ-देवालयं गत्वा विग्रहं नमस्कृतवान्। तत्समये विग्रहस्य मुखं परिवृत्य स्थितम् इति श्रूयते।






युद्धस्य परिणामः आत्मानुकूलः न भविष्यति इति जानन् अपि देशिंगुराजः युद्धसङ्कल्पं न त्यक्तवान्। सप्त वर्षाणि यावत् विरोचितं युद्धं कृत्वा युद्धरङ्गे एव प्राणान् अत्यजत्। अनन्तरं तस्य पत्नी अग्निप्रवेशं कृतवती।

एतस्याः दुर्घटनातः जिञ्जीदुर्गस्य पतनकालः अपि समारब्धः। तथापि तदीयानि कानिचन भवनानि अद्यापि चित्ताकर्षकाणि एव सन्ति। तेषु प्रधानं 'कल्याणमहल्'।





अत्रत्या एका उन्नता शिला मरणशिखरनाम्ना ख्यातम् अस्ति, यस्याः च पार्श्वे कूपाकारकः विशालगर्तः अस्ति। पूर्वं मरणदण्डनार्हाः अपराधिनः एतस्मिन् गर्ते पात्यन्ते स्म। इदानीम् अपि अशिथिलरूपेण स्थिता अत्रत्या अश्वशाला, तेषु दिनेषु अश्वसंरक्षणार्थं शासकैः प्रदर्शितां श्रद्धां स्मारयति।



# वृद्धस्य विवाहः

सरसपुरग्रामे रामानुजः नाम महाधनिकः निवसति स्म। तस्य पित्रार्जिता सम्पत्तिः आसीत् एव। स्वयम् अपि श्रमेण वाणिज्यं कुर्वन् सः यथेष्टम् ऐश्वर्यम् सम्पादितवान् आसीत्। इदानीं सः षष्टिवर्षीयः। तस्य गृहे पुत्रपुत्र्यः, पौत्राः, पौत्र्यः च निवसन्ति स्म। रामानुजस्य पत्नी केभ्यश्चित् वर्षेभ्यः पूर्वं दिवङ्गता आसीत्।

एकदा रामानुजः विवाहघटकं कृष्णशर्माणं स्वगृहम् आहूतवान्। तम् उक्तवान् च– "श्रीमन्! अहं पुनर्विवाहितः भवितुम् इच्छामि। काञ्चित् सुन्दरीं कन्याम् अन्विष्य मां सूचयतु। कन्या निर्धनकुलीया भवतु। मम तु यथेष्टम् ऐश्वर्यम् अस्ति। अतः वरदक्षिणादिकस्य अपेक्षा सर्वथा नास्ति। विवाहव्ययविषये कन्यापित्रा चिन्तनीयं नास्ति" इति।

रामानुजस्य अपेक्षां श्रुत्वा कृष्णशर्मा आश्चर्यचकितः। यतः रामानुजः सज्जनः, धर्मनिष्ठः इति नगरे सर्वत्र प्रसिद्धिः आसीत्। एतादृशस्य मनसि ,तत्रापि पश्चिमे वयसि, कथं विवाहविषये आसक्तिः उत्पन्ना? कस्मिन् काले कस्य बुद्धिः कथं भवति इति कोऽपि ज्ञातुं न शक्नोति एव' इति आलोचितवान् कृष्णशर्मा।

"तथैव भवतु श्रीमन्! शीघ्रम् एव कन्याम् अन्विष्य भवते निवेदयिष्यामि" इति उक्त्वा ततः निर्गतवान् कृष्णशर्मा।

एषः वार्तालापः यदा प्रवृत्तः तदा रामानुजस्य स्नुषा जयलक्ष्मीः गृहे एव आसीत्। सहजतया सा अपि तयोः वार्तालापं श्रुतवती। श्वशुरस्य इच्छां श्रुतवत्याः तस्याः अपि आश्चर्यम् एव।

सायङ्काले जयलक्ष्याः पतिः वेङ्कटरमणः गृहम् आगतवान्। सः अपि पितुः विवाहेच्छां ज्ञात्वा पत्नीम् उक्तवान्–



माता तु वर्षचतुष्टयात् पूर्वम् एव दिवङ्गता। किन्तु अद्यावधि पिता पुनर्विवाहविषये न चिन्तितवान् आसीत्। यत् मनसि स्फुरति तत् साधयति एव सः। अतः मौनं स्थितिः एव वरम्" इति।

दशदिनानाम् अनन्तरं कृष्णशर्मा रामानुजस्य गृहम् आगतवान्। रामानुजम् उक्तवान् च– "श्रीमन्, महता परिश्रमेण मया योग्या वधूः अन्विष्टा अस्ति। सर्वसिद्धिनामके ग्रामे सीतारामः नाम निर्धनः अस्ति। तस्य पुत्री रत्ना सुन्दरी गुणवती च। किन्तु वरपक्षीयाणाम् अपेक्षां पूरयितुम् असमर्थः सीतारामः पुत्र्याः विवाहं कर्तुं न शक्तवान्। रत्नायाः अनुजाद्वयम् अपि इदानीं प्राप्तवयस्कम् अस्ति" इति।

"मम वयः तेभ्यः निवेदितं वा? तौ कन्यापितरौ मह्यं कन्यां दातुं मनसा किम् अङ्गीकृतवन्तौ?" इति कृष्णशर्माणं पृष्टवान् रामानुजः।

"भवदीयान् **सर्वान्** विषयान् तौ निवेदितवान् अस्मि। '**कथञ्चित्** पुत्र्याः विवाहः भवति चेत् पर्याप्तम्' इति तयोः विचारः। रत्ना द्वाविंशतिवर्षीया कन्या। रूपेण लक्ष्मीः सा" इति उक्तवान् कृष्णशर्मा।

"अस्तु तावत्, सा रत्ना मया द्रष्टव्या। एतदर्थम् उत्तमं दिनम् अन्विष्य मां कथयतु" इति उक्तवान् रामानुजः।

कृष्णशर्मा पञ्चाङ्गम् उद्घाट्य ग्रहगतिं परिशील्य– "आगामी शुक्रवासरः एकादशीतिथिः एतदर्थम् उत्तमं दिनम्" इति उक्तवान्।

एषा वार्ता ग्रामे सर्वत्र प्रसृता। रामानुजः यस्मिन् मार्गे निवसति तेन मार्गेण ग्रामीणाः यदा गच्छन्ति तदा कुतूहलेन रामानुजगृहं पश्यन्तः– "एतस्य गृहस्य यजमानस्य वृद्धस्य विवाहः!" इति उपहसन्तः गच्छन्ति स्म।

पुत्रः वेङ्कटरमणः वा स्नुषा जयलक्ष्मीः वा रामानुजम् एतद्विषये किमपि न पृष्टवन्तौ एव। रामानुजः अपि स्वपुनर्विवाहस्य प्रस्तावं गृहे स्वयं न कृतवान्।

पूर्वनिश्चयानुसारं कृष्णशर्मा रामानुजस्य गृहम् आगतवान्। रामानुजः

हस्तेन एकं स्यूतं गृहीत्वा कृष्णशर्मणा सह सर्वसिद्धिग्रामं प्रति प्रस्थितवान्।

मुनिरामः अतिथीन् सल्लापेण स्वागतीकृत्य सत्कृतवान्। वधूं रत्नां प्रदर्शितवान् च।' रत्ना वस्तुतः अपि रत्नायते स्म।

रामानुजः तां दृष्ट्वा तृप्तिं प्रकटयन् मुनिरामम् उक्तवान्– "महोदय! मम विवाहवार्तां श्रुत्वा सर्वे उपहसन्तः सन्ति, 'वार्धक्ये किम् एतत् चापल्यम्?' इति वदन्तः सन्ति इति अहं जानामि। वर्षचतुष्टयात् पूर्वम् एव मम पत्नी दिवङ्गता। यदि अहम् इच्छेयं तर्हि इतः पूर्वम् एव विवाहितः भवेयम्। किन्तु मम पुनर्विवाहे इच्छा एव नास्ति। एषा तु वस्तुस्थितिः" इति।

एतत् वचनं श्रुतवतः मुनिरामस्य मुखं म्लानम्। सः खेदेन उक्तवान्– "भवान् सज्जनः इति श्रुतवान् आसम्। वधूदर्शनव्याजेन मम परिस्थितिम् उपहसति किल भवान्!" इति।

कृष्णशर्मा तु मतिभ्रान्तः इव इतस्ततः पश्यन् आसीत्।

रामानुजः शान्तस्वरेण एव उक्तवान्– "मुनिराममहोदय! उद्वेगः खेदः वा मास्तु। मादृशाय वृद्धाय अपि रत्नसदृशीं कन्यां दातुं सिद्धस्य भवतः परिस्थितिः कीदृशी स्यात् इति अहं ज्ञातुं शक्नोमि। भवादृशस्य साहाय्यं करणीयम् इत्येव मम उद्देशः। दानस्वीकर्तुः सत्पात्रतां परीक्षितुम् अहम् एवम् अभिनीतवान्। कृष्णशर्मणः उपयोगः अपि स्वीकृतः" इति। अनन्तरं स्यूततः



धनग्रन्थिं निष्कास्य मुनिरामस्य पुरतः स्थापितवान्।

रामानुजस्य वचनं श्रुत्वा धनं च दृष्ट्वा तत्रस्थाः सर्वे आश्चर्यचकिताः।

तदा रामानुजः पुनः उक्तवान्– "अत्र विंशतिसहस्रं रूप्यकाणि सन्ति। मम पत्नी निर्धनकुलात् एव आगता। तथापि तस्याः पितृसकाशात् मम पिता पर्याप्तमात्रेण वरदक्षिणां प्राप्तवान् आसीत्। मम पत्नी एतां घटनां सम्यक् स्मरति स्म। तस्याः सूचनां परिपालयन् अहं वरदक्षिणां तिरस्कृत्य स्नुषां मम गृहम् आनीतवान्। एषा वार्ता प्रायः कृष्णशर्मणा ज्ञायते अपि" इति।

"आं श्रीमन्! भवतः धर्मगुणः सर्वत्र प्रसिद्धः खलु" इति उत्तरितवान् कृष्णशर्मा।

"श्रीमन्! सत्यं वदामि– मयि कोऽपि सद्गुणाः यदि स्युः तर्हि तत्र कारणं मम पत्नी एव। सा मरणात् पूर्वं मां निवेदितवती यत् मम मरणानन्तरं मदीयानि कण्ठहारादीनि विक्रीय प्राप्तं धनं तादृशाय कन्यापित्रे दातव्यं यश्च गुणवत्याः अपि कन्यायाः विवाहं दारिद्र्यकारणतः कर्तुं न शक्नोति इति। अतः एव अहं तस्याः मरणानन्तरम् आभरणानि विक्रीय प्राप्तं धनं वाणिज्ये नियोजितवान्। वाणिज्यव्यग्रः अहं सत्पात्रतां ज्ञातुं न शक्नोमि इति कारणेन पुनर्विवाहस्य नाटकम् अभिनीतवान्। इदानीम् एतत् धनं स्वीकरोतु" इति।

रामानुजस्य उदारतां दृष्टवतः मुनिरामस्य तत्पत्न्याः च नेत्राभ्याम् आनन्दाश्रूणि आगतानि।

"योग्यं वरम् अन्विष्य एतेन धनेन पुत्र्याः रत्नायाः विवाहम् सद्यः एव निर्वर्तयतु" इति उक्त्वा गन्तुम् उद्युक्तः रामानुजः।

"रामानुजार्य! भवतः उपकारभारात् वयं अस्मिन् जन्मनि निवृत्तिं प्राप्तुं शक्नुमो वा न वा" इति रामानुजस्य हस्तद्वयं स्वहस्तेन स्वीकृत्य सगद्गदम् उक्तवान् मुनिरामः।

एतावत्पर्यन्तं द्वारस्य पृष्ठतः स्थित्वा सर्वं श्रुतवती रत्ना बहिः आगत्य कृतज्ञताभावेन रामानुजस्य पादयोः नमस्कारं कृतवती।





# उत्तररामायणम्

परेद्यु: यदा राम: सभायां विराजमान: आसीत्, तदा एक: शुनक: सभाद्वारस्य समीपम् आगत्य, बहि: एव स्थित्वा, अन्त: गन्तुम् अनुमतिं पृच्छन् इव शिर: चालयन् भषितुम् आरब्धवान्। तस्य भषणं श्रुत्वा 'एष: महाराजं किमपि निवेदयितुम् इच्छति' इति लक्ष्मण: ज्ञातवान्। स तं शुनकं अन्त: नीतवान्।

तस्य शुनकस्य शिरसि एक: व्रण: आसीत्। तादृशं तं दृष्ट्वा राम: —"भवत: कीदृश: क्लेश:? कस्मात् का विपत्ति: आपतिता? मम पुरत: निर्भयं वदतु" इति पृष्टवान्।

"प्रभो, सर्वार्थसिद्धिनामक: कश्चित् भिक्षु: मम शिरसि दण्डेन ताडितवान्। अहं तु तस्य किमपि अपकारं न चिन्तितवान् अपि" इति उक्तवान् शुनक:।

राम: सद्य: एव शुनकस्य औषधोपचारार्थं व्यवस्थां कृत्वा, तं भिक्षुम् आनाय्य —"भवान् किमर्थम् एतस्य शुनकस्य मस्तकं ताडितवान्?" इति पृष्टवान्।

"महाराज, अहं गृहं गृहम् अटन् भिक्षां सम्पाद्य जीवनं यापयामि। अद्य मम कुत्रापि किमपि न लब्धम्। तेन खिन्न: अहं दु:खेन यदा गच्छन् आसम्, तदा एष: शुनक: मम मार्गक्रमणस्य प्रतिरोधं कृतवान्। बहुप्रयत्नेन अपि यदा एष: अग्रे अगच्छन् मम मार्गे अचल: स्थितवान्, तदा क्रोधतप्त: अहं मम दण्डेन एतस्य शिरसि प्रताडितवान्। बुभुक्षापीडितं शुनकं ताडितवान् अहम् इति तु सत्यम् एव। अत: एतस्य अपराधस्य कृते भवान् मां यथेच्छं दण्डयतु" इति उक्तवान् सर्वार्थसिद्धि:।

तदा राम: सभायाम् उपस्थितान् सभ्यान्



उद्दिश्य "एषः भिक्षुः कीदृशदण्डम् अर्हति?" इति पृष्टवान्। सभायां महान्तः मेधाविनः पण्डिताः च यद्यपि बहवः आसन्, तथापि ते उचितं दण्डं सूचयितुम् असमर्थाः भूत्वा तूष्णीं स्थितवन्तः। किमर्थम् इति चेत् तत्र वादी प्रतिवादी च बुभुक्षापीडया अपराधं कृतवन्तौ।

यदा सर्वे तूष्णीं स्थितवन्तः, तदा क्षतपीडितः सः शुनकः रामं –"भोः रामप्रभो, तस्य कृते अहम् एकं दण्डं सूचयामि। कालञ्चरनामके स्थाने कुलपतिरूपे उद्योगे एतं नियोजयतु" इति उक्तवान्।

रामः शुनकस्य अपेक्षानुसारेण तं भिक्षुं तस्मिन् एव उद्योगे नियोजितवान्। सद्यः एव गजस्य उपरि उपवेश्य उद्योगस्थानं प्रति प्रेषितवान्। भिक्षुः महता सन्तोषेण मत्तः भूत्वा कालञ्चरे कुलपतिस्थानं प्राप्तुं प्रस्थितवान्।

अनन्तरं रामः सचिवाः च तं शुनकं दृष्ट्वा –"सः भिक्षुः भवन्तं ताडितवान् खलु? भवान् तु तस्य ताडनस्य दण्डरूपेण महासन्तोषदायकं उन्नतम् अधिकारस्थानं दापितवान्। अत्र किमपि विशेषकारणं स्यात्। तत् किम् इति कृपया वदतु भोः" इति पृष्टवन्तः।

"अहं पूर्वजन्मनि तस्मिन् एवं उद्योगे आसम्। तदा अहं भोक्तुं षड्रसान्नभोजनं, दासदासीजनाः इत्यादिसर्वसुखभोगान् प्राप्तवान्। अहं सज्जनः, महाविनयशीलः, भूतदयावान् च इति सर्वैः जनैः श्लाघितः। देवतानां ब्राह्मणानां च सेवापूजादिकं च कृतवान्। एवं रीत्या अहं बहिः प्रख्यातः। किन्तु अन्तरङ्गे अहं स्वार्थी आसम्। तस्याः पदव्याः निमित्तेन अहम् एतादृशं नीचजन्म प्राप्तवान्। महाकोपी, दयादाक्षिण्यरहितः एषः भिक्षुः तां पदवीं निर्वक्ष्यति चेत्, सर्वेषु आगामिजन्मसु घोरनरकम् एव अनुभविष्यति" इति उक्तवान् शुनकः।

अनन्तरं सः शुनकः सभातः निर्गतवान्।

पुनः कतिपयदिनानन्तरम् एकः उलूकः एकः गृध्रः च परस्परं किमपि वादविवादं कुर्वन्तौ न्यायनिर्णयं प्राप्तुं रामस्य समीपम् आगतवन्तौ। एकस्मिन् अरण्ये स्थितस्य एकस्य गृहस्य स्वाम्यविषये तयोः महान् विवादः।

"इदं मम गृहम्" इति उलूकः। "न हि मम" इति गृध्रः।

तयोः विवादं परिहर्तुकामः रामः तस्य



विवादस्य मूलकारणं सम्यक् ज्ञातुं मन्त्रिजनैः सह पुष्पकविमानम् आरुह्य वने स्थितं तत् गृहं प्रति गतवान्।

"एतत् गृहं भवान् कदा निर्मितवान्? तदा अत्र किम् आसीत्?" इति रामः गृध्रं पृष्टवान्।

"भूमौ यदा मनुष्याः जन्म प्राप्तवन्तः तदारभ्य अहम् एतस्मिन् गृहे एव वसन् अस्मि। अतः एतत् मदीयं गृहम्" इति उक्तवान् गृध्रः।

तदा झटिति उलूकः –"भोः रामप्रभो, भूमौ यदा सस्यानाम् उत्पत्तिः अभवत्, तदा एव अहम् एतत् गृहं निर्मितवान्। एतत् मम एव गृहम्। एतस्मिन् विषये मम वयः एव प्रमाणम्। गृध्रः तु अनन्तरं जातः। यदा अहम् आहारार्थं बहिः गतवान् तदा एषः मम गृहं स्वायत्तीकृतवान्" इति उक्तवान्।

रामेण सह तत्र स्थिताः सचिवाः –"प्रभो, एतत् उलूकस्य एव गृहम्। किमर्थम् इति चेत् सृष्टौ प्रप्रथमं सस्यानाम् एव उत्पत्तिः अभवत्" इति उक्तवन्तः।

वृद्धस्य उलूकस्य गृहम् अपहर्तुम् इच्छन् गृध्रः दण्डनीयः इति रामः यदा निश्चयं कृतवान्, तदा काचन आशरीरवाणी तत्र श्रुता।

"भोः राम! पूर्वमेव शापग्रस्तस्य एतस्य गृध्रस्य उपरि पुनः किमर्थं दण्डप्रयोगं करोति? एषः गृध्रः ब्रह्मदत्तनामकः महाराजः। सः महाधनिकः, शूरः, सत्यसन्धः च आसीत्।

एकदा गौतमः अतिथिरूपेण एतस्य गृहम् आगतवान्। तदा ब्रह्मदत्तराजः गौतमाय स्वयम् एव अर्घ्यपाद्यादिकं दत्त्वा उपचरितवान्। एवं रीत्या ब्रह्मदत्तस्य आतिथ्यं स्वीकुर्वन् गौतमः तत्रैव कतिपयदिनानि स्थितवान्।

एकस्मिन् दिने तस्य भोजने अकस्मात् एकः मांसखण्डः दृष्टः। तं दृष्ट्वा क्रुद्धः गौतमः महाराजं –"भवान् गृध्ररूपं प्राप्नोतु" इति शप्तवान्।

अनन्तरं यदा ब्रह्मदत्तः बहुधा प्रार्थितवान्, तदा गौतमः आर्द्रहृदयः भूत्वा इक्ष्वाकुवंशे जनिष्यमाणस्य रामस्य स्पर्शेन भवतः शापविमोचनं भविष्यति" इति वरेण तम् अनुगृहीतवान्" इति।

अशरीरवाणीं श्रुत्वा रामः तं गृध्रं स्पृष्टवान्। सद्यः एव सः गृध्रः दिव्यपुरुषरूपं प्राप्तवान्। ब्रह्मदत्तराजः सः पुरुषः कृतज्ञतापूर्वकं रामं नमस्कृत्य ततः



निर्गतवान्।

अनन्तरं कदाचित् यमुनातीरवासिनः केचन मुनयः रामस्य दर्शनार्थम् आगतवन्तः। तैः अर्पितं यमुनाजलं, फलपुष्पादिकं च स्वीकृत्य रामः तान् सर्वान् सुखासनेषु उपवेश्य, तेषाम् आगमनकारणं पृष्ठवान्।

"लवणासुरनाकः राक्षसः रुद्रवरप्रभावेण गर्वितः भूत्वा अस्मान् नानाप्रकारैः पीडयन् अस्ति। तस्य पीडातः अस्मान् रक्षत" इति ते मुनयः रामं प्रार्थितवन्तः।

लवणनामकः सः राक्षसः मधुनामकस्य राक्षसस्य पुत्रः। मधुः रुद्रस्य ध्यानं कुर्वन् बहुदीर्घकालं यावत् तपः आचरितवान्। तेन तपसा प्रीतः रुद्रः प्रत्यक्षीभूय स्वीयत्रिशूलतः अन्यत् त्रिशूलम् उत्पाद्य मधोः हस्ते तत् दत्त्वा –" यावत् एतत् त्रिशूलं भवतः हस्ते स्थास्यति तावत् भवन्तं जेतुं कोऽपि न शक्नोति" इति उक्तवान्।

तावता अपि तृप्तिम् अप्राप्नुवन् मधुः "तत् त्रिशूलं वंशपारम्पर्यरूपेण अस्माकं गृहे तिष्ठतु" इति पुनः शिवं साग्रहं प्रार्थितवान्।

तदा शिवः –"भवतः कालानन्तरम् एतत् त्रिशूलं केवलं भवदीयपुत्रस्य कृते उपयोगाय भविष्यति। अनन्तरं तेन किमपि प्रयोजनं न भविष्यति" इति उक्तवान्।

तादृशः मधुः **रावणस्य अनुजां कुम्भीनसां परिणीतवान्। तयोः पुत्रः एव लवणः। एषः लवणः सर्वदा अपि महादुष्टः आसीत्। तस्य दुर्गुणान् दूरीकृत्य तं सज्जनं कर्तुं मधुः असमर्थः अभवत्। मधुः यदा वरुणलोकं प्रति प्रस्थितवान्, तदा शिवेन प्राप्तं त्रिशूलं लवणाय दत्तवान्।** तस्य अद्भुतशक्तिं जानन् लवणः महता अहङ्कारेण विजृम्भमाणः मुनिजनान् पीडयन् आसीत्। मधुः यथा सज्जनः आसीत्, तथा अवर्तमानः लवणः क्रौर्यादिदुर्गुणयुक्तः आसीत्।

मुनिभिः उक्तान् सर्वविचारान् श्रुत्वा रामः तान् उद्दिश्य –"इतः परं भीतिः मास्तु। बहुशीघ्रम् एव अहं लवणासुरं संहरिष्यामि" इति तेभ्यः मुनिभ्यः अभयं प्रदत्तवान्।

अनन्तरं रामः स्वीयान् अनुजान् दृष्ट्वा "लवणासुसंहारकार्यं भवत्सु कः करिष्यति?" इति पृष्टवान्।

भरतः उत्थाय –"अहं तत् कार्यं

करोमि" इति उक्तवान्। तदा भरतेन सह स्पर्धमानः इव शत्रुघ्नः उत्थाय – "अहम् एव लवणासुरं हनिष्यामि। मयि विद्यमाने एतत् कार्यार्थं भरतस्य गमनम् अयुक्तम्। पूर्वं भरतः यदा नन्दिग्रामे आसीत्, तदा सर्वप्रकारान् क्लेशान् सः अनुभूतवान्। अतः इदानीम् एतत् श्रमकार्यम् अहम् एव वक्ष्यामि" इति उक्त्वा रामं नमस्कृतवान्।

रामः तस्य वचनम् अङ्गीकृत्य शत्रुघ्नं मधुपुरस्य महाराजं कर्तुं निश्चित्य, राज्याभिषेकार्थं व्यवस्थां कृतवान्। एकः राजा म्रियते चेत् झटिति अन्येन महाराजेन तत् राज्यं पालयितुं सिद्धेन भवितव्यम् आसीत्। अतः पूर्वमेव शत्रुघ्नस्य मधुपुरराज्याभिषेकं समाप्य, रामः स्वसमीपस्थितं विशिष्टं बाणम् एकं शत्रुघ्नाय दत्त्वा एवं सूचितवान्।

"एषः बाणः पूर्वं मधुकैटभौ हतवान्। एषः पूर्वं मया रावणस्य उपरि अपि न प्रयुक्तः। एतेन भवान् लवणासुरं मारयतु। अत्र अन्यः विशेषविषयः ज्ञातव्यः। लवणस्य समीपे शिवस्य त्रिशूलसदृशम् अन्यत् त्रिशूलम् अस्ति। यदा तत् लवणस्य हस्ते भवति तदा तं हन्तुं कोऽपि समर्थः न भवति। अतः इदानीं भवता किं करणीयम् इति चेत्, यदा लवणः नगरात् बहिः कुत्रापि गच्छति, तदा तस्य- नगरस्य महाद्वारस्य उपरि आक्रमणं करणीयम्। तस्मिन् समये लवणस्य त्रिशूलं तस्य गृहे एव भवति। यदा लवणः प्रत्यागमिष्यति, तदा द्वारस्य समीपे एव तं स्थगयित्वा, तत्रैव तस्य हननं करणीयम्। यथा सः नगरं प्रवेष्टुं, त्रिशूलं



ग्रहीतुं च न शक्नोति तथा व्यवस्था करणीया" इति।

एतत् श्रुत्वा शत्रुघ्नः पूर्वमेव सेनां तत्र प्रेषितवान्। "आत्मानं हन्तुं कश्चित् आगच्छन् अस्ति इति लवणः यथा न जानाति तथा जागरूकता आश्रयणीया। ग्रीष्मऋतौ एव सेना गङ्गानदीं तीर्त्वा लवणस्य नगरसमीपं गच्छतु। भवान् वर्षकालस्य आरम्भे धनुर्धारी भूत्वा तत्र गच्छतु तथा लवणासुरसंहारं करोतु ।" इति एतं सर्वं युद्धक्रमं स्वयं रामः एव शत्रुघ्नं सविस्तरं सूचितवान्।

तदनुसारेण शत्रुघ्नः पूर्वमेव स्वीयसेनाः प्रेषितवान्। पुनः एकमासानन्तरं स्वयम् अपि प्रस्थितवान्।

मार्गमध्ये दिनद्वयं यावत् सः वाल्मीके



आश्रमे स्थितवान्। वाल्मीकिः तस्या सादरं सत्कारं कृतवान्। अनन्तरं एतोलापं कुर्वन्, सः आश्रमः पूर्वं कदाचित् रघुवंशीयानाम् एव आसीत्, इति वदन् तं विचारं सविवरण कथितवान्।

पूर्वं कदाचित् रघुवंशे सुदासनामकः कश्चित् जातः। तस्य सुदासस्य पुत्रः वीरसहः बाल्ये एव मृगयार्थं वनं गच्छति स्म।

तस्मिन् अरण्ये द्वौ राक्षसौ आस्ताम्। तौ राक्षसौ व्याघ्ररूपं धृत्वा अन्यमृगैः सह अटन्तौ यथेच्छं वनमृगान् भक्षयन्तौ कालं यापयतः स्म। तेन कारणेन तत् अरण्यं कालक्रमेण नश्यति स्म।

एतत् दृष्ट्वा, वीरसहः क्रुद्धः अभवत्। सः तौ राक्षसौ दृष्ट्वा झटिति तयोः मध्ये अन्यतरं हतवान्।

तदा द्वितीयः राक्षसः –"रे दुष्ट कारणं विना मम अनुजं भवान् मारितवान् किल। पश्यतु, भवतः का गतिः भवति इति।" इति गर्जनं कृत्वा तिरोहितः अभवत्।

अनन्तरं कालः व्यतीतः। सः राजा वीरसहः एकदा एतस्मिन् एव आश्रमे बृहत्प्रमाणकम् अश्वमेधयागं कृतवान्। वसिष्ठः एव तं यागं कारितवान्। यदा यागः समाप्तः तदा प्रतीकारं कर्तुम् इच्छुः पूर्वोक्तः राक्षसः वसिष्ठस्य रूपं धृत्वा महाराजस्य समीपं गत्वा –"भोः राजन्। यज्ञः समाप्तः। तदर्थं समीचीनं मांसभोजनं सज्जीकरोतु" इति उक्तवान्।

महाराजः महता सन्तोषेण पाचकम् आहूय "अस्माकं गुरूणां कृते हविषः मांसेन अत्युत्तमं भोजनं सज्जीकरोतु" इति आदिष्टवान्।

अनन्तरं सः राक्षसः पाचकस्य रूपं धृत्वा नरमांसेन पाकं कृत्वा महाराजं "हविषा मया उत्तमः पाकः कृतः अस्ति" इति सविनयम् उक्त्वा पाकं प्रदर्शितवान्।

महाराजस्य आदेशानुसारेण तस्य पत्नी मदयन्ती स्वयम् एव तं नरमांसपाकं वसिष्ठाय परिविष्टवती।

किन्तु सः नरमांसपाकः इति ज्ञात्वा वसिष्ठः महता क्रोधेन "राजन्! भवान् नरभक्षकः भूत्वा अटतु" इति घोरं शापं दत्तवान्।

महाराजः अपि कोपं प्राप्य वसिष्ठम् उद्दिश्य शापवचनं वक्तुं जलं हस्ते गृहीतवान्।

किन्तु झटिति तत्रत्या मदयन्ती तं निवारयन्ती "दैवसदृशः एषः न शापार्हः" इति उक्तवती। तदा महाराजः स्वहस्ते स्थितं जलं स्वीयपादयोः उपरि एव स्रावितवान्। कल्मषयुक्तेन तेन जलेन महाराजस्य पादौ कृष्णवर्णीयौ जातौ। तदारभ्य सः कल्माषपादः इति नामधेयं प्राप्तवान्।

अनन्तरं वसिष्ठः तत्र प्रवृत्तं सर्वं वृत्तान्तं दिव्यदृष्ट्या ज्ञात्वा कल्माषपादस्य उपरि स्वीयशापस्य प्रभावः केवलं द्वादशवर्षपर्यन्तं भवतु इति अनुगृहीतवान्।

महाराजः द्वादशवर्षाणि यावत् नरभक्षकरूपेण जीवनं यापयित्वा, ततः शापविमुक्तः भूत्वा पूर्ववत् मानवरूपं प्राप्य यथापूर्वं सम्यक् राज्यपरिपालनं कृतवान्।

वाल्मीकिमुखात् एतां कथां श्रुत्वा शत्रुघ्नः यदा वाल्मीकेः पर्णशालां प्रविष्टवान्, तदा सीता शिशुयुगलं प्रसूतवती इति वार्ता श्रुता। मुनिकुमाराः तत्र आगत्य एतं वृत्तान्तं वाल्मीकिं महर्षिं निवेदितवन्तः। सद्यः एव वाल्मीकिः तत्र गत्वा बालचन्द्रवत् प्रकाशमानौ शिशू दृष्ट्वा तयोः रक्षामन्त्रं बद्ध्वा प्रथमस्य कुशः इति, द्वितीयस्य लवः इति च नामद्वयं निश्चितवान्।

एषा घटना साक्षात् मध्यरात्रे घटिता। तस्मिन् एव समये शत्रुघ्नः सीतायाः समीपं गत्वा "महाभाग्यं सम्प्राप्तम् अम्ब!" इति स्वीयं सन्तोषं प्रकटितवान्।

परेद्युः शत्रुघ्नः वाल्मीकेः अनुज्ञां प्राप्य पश्चिमदिशं प्रति प्रयाणं कुर्वन् सप्तमे दिने यमुनानद्याः तीरं सम्प्राप्य तत्र कस्मिंश्चित् ऋष्याश्रमे सत्कालक्षेपं कुर्वन् तां रात्रिं नीतवान्।



अनन्तरं प्रातःकाले शत्रुघ्नः च्यवनमहर्षेः दर्शनं प्राप्य, लवणासुरविचारं तस्य त्रिशूलस्य विषयं च तं पृष्टवान्। सः लवणः शिवदत्तेन तेन त्रिशूलेन अनेकानि दारुणकृत्यानि कृतवान् इति वदन् च्यवनः मान्धातुः वृत्तान्तं वर्णितवान्।

अयोध्यायाः महाराजस्य यवनाश्वस्य कुमारः मान्धाता। महाबलिष्ठः मान्धाता भूमौ वर्तमानान् सर्वान् नृपान् जितवान्। एतं वृत्तान्तं ज्ञात्वा देवेन्द्रादयः सर्वाः देवताः भीताः।

यदा मान्धाता तत्र आगत्य इन्द्रस्य अर्धासनं, देवतानां सेवां च प्राप्तुम् अपेक्षितवान् तदा इन्द्रः मान्धातारं "प्रथमं भूलोकं जित्वा आगच्छतु। अनन्तरं देवलोकं भवते दास्यामः" इति उक्तवान्।

"किमिदम् उच्यते? इतः पूर्वम् एव सम्पूर्णभूलोकः मया जितः। तत्र मम आज्ञायाः विरोधः कुत्रापि नास्ति" इति उक्तवान् मान्धाता।

"मान्धातः, मधुवने लवणासुरः इति कश्चन अस्ति। सः भवतः आज्ञाम् अनुसरति वा?" इति मान्धातारं पृष्टवान् इन्द्रः।

तद्वचनं श्रुत्वा मान्धाता लज्जया अवनतमस्तकः भूत्वा भूमिं प्रत्यागत्य, लवणासुरं जेतुं सेनासहितः मधुवनं गत्वा 'लवणासुरः मम अधीनः भवतु' इति दूतद्वारा सन्देशं प्रेषितवान्।

तस्य सन्देशं प्रापयितुं गतः दूतः बहुदिनानन्तरम् अपि यदा न प्रत्यागतवान्, तदा मान्धाता लवणस्य उपरि युद्धं कर्तुम् आरब्धवान्। लवणः आगत्य मान्धातारं दृष्ट्वा हसन् स्वीयं त्रिशूलं यदा प्रयुक्तवान् तदा तेन त्रिशूलेन मान्धातृसहिता तस्य सम्पूर्णसेना भस्मीभूता अभवत्।

च्यवनः एतां वार्तां कथयित्वा "यदा तस्य हस्ते त्रिशूलं वर्तते तदा एवमेव भवति। अतः तस्य हस्ते यदा त्रिशूलं न भवति, तस्मिन् समये एव भवान् तं हन्तुं शक्नोति। तादृशः अवकाशः श्वः एव लभ्यते" इति उक्तवान्।

एतादृशैः सरसवचनैः रात्रिः सलीलं व्यतीता। अनन्तरं शत्रुघ्नः उत्साहेन उत्थाय लवणासुरं द्रष्टुम् इच्छन् तं प्रतीक्षमाणः अतिष्ठत्।





# युक्तिमान् सैनिकः

**पूर्वं** कदाचित् मात्यासुनामकः हङ्गरीदेशस्य राजा अभवत् । सिंहासनारोहणानन्तरं सः ज्ञातवान् यत् सैनिकाः पानमत्ताः सन्तः सदा जडतया कुत्रचित् पतिताः भवन्ति इति। किन्तु एते सैनिकाः प्रतिमासं वेतनरूपेण, केवलं चत्वारि ताम्रनाणकानि प्राप्नुवन्ति, तावदेव। 'एतेन अल्पेन वेतनेन ते कथं वा एवं सुरापानं कर्तुं शक्नुवन्ति?' इति कुतूहलः उत्पन्नः महाराजस्य मनसि। 'कथमपि उपायेन एतत् रहस्यं ज्ञातव्यम् एव' इति निश्चितवान् सः।

मात्यासुराजः कदाचित् सैनिकवेषं धृत्वा राजधानीतः निर्गतवान्। सैनिकानां व्यवहारं सुसूक्ष्मं परिशीलयन् सायङ्कालसमये इतरे सैनिकाः इव नगरात् बहिर्भागे स्थितं मदिरापणं प्राप्तवान्।

यदा सः द्वारसमीपं गतवान् तदा तेन मदिरापणस्य अन्तर्भागतः अट्टहासध्वनिः कोलाहलः च श्रुतः। अन्तः सैनिकाः पानमत्ताः सन्तः उन्मादलोके सन्ति इति ज्ञातवान् मात्यासुराजः। युक्ते समये अहम् आगतवान् इति चिन्तयन् सः अन्तः प्रविष्टवान्।

अन्तः चत्वारः प्राचीनसैनिकाः आसन्। तेषु एकः नूतनस्य हस्तं गृहीत्वा– "आगच्छतु भोः, कदा सैन्यं प्रविष्टवान् भवान्?" इति पृष्टवान्।

"एकः सप्ताहः अतीतः" इति उक्तवान् मात्यासु- महाराजः।

तदा प्राचीनसैनिकः एतस्य स्कन्धे हस्तं संस्थाप्य– "इतःपरं द्वादश वर्षाणि यावत् नीरसजीवनं भवतः। किन्तु नियतरूपेण वेतनप्राप्तिः तु निश्चिता। तत्सर्वम् अस्तु तावत्। धनं निष्कासयतु। नाणकद्वयं व्ययीकृत्य मदिराम् आनयतु। सर्वे उत्सवम् आचरेम" इति उक्तवान्।

"मम समीपे 'धनं नास्ति किल? अहं

"हंगरीदेशस्य जानपदकथा"



निर्धनः" इति उक्तवान् राजा।

"किं भोः, एवं वदति! ह्यः एव वेतनं प्राप्तवान् स्यात् खलु भवान्? किञ्चित् वा मदिरा मह्यं दापनीया एव भवता" इति उक्तवान् सः प्राचीनः सैनिकः।

राजा तस्य निर्बन्धात् विमोचनं प्राप्तुं न शक्तवान्। तस्मै मदिरां दापितवान् सः। तदा इतरे त्रयः अपि एकैकशः महाराजस्य समीपम् आगत्य मदिरार्थं धनं बलात् व्ययीकारयित्वा स्वेच्छया मदिरां पीतवन्तः। एवं महाराजस्य कोपः रिक्तः जातः।

एतावता अपि तेषां तृप्तिः न जाता। तेषु योष्यानामकः आपणिकस्य समीपं गत्वा- "ऋणत्वेन किञ्चित् मदिरां ददातु। श्वः धनं दास्यामि" इति उक्तवान्।

"सैनिकाय कदापि ऋणत्वेन किमपि न ददामि" इति निर्दाक्षिण्यम् उक्तवान् सः मदिरापणिकः।

योष्का कुपितः सन् "मयि विश्वासः यदि न स्यात् तर्हि एतं खड्गं न्यासरूपेण स्वीकृत्य किञ्चित् मदिरां ददातु भोः" इति उक्तवान्।

आपणिकः खड्गं स्वीकृत्य चतुर्भ्यः सैनिकेभ्यः अपि किञ्चित् किञ्चित् मदिरां दत्त्वा "इतः परं गच्छन्तु। द्वारपिधानस्य समयः आसन्नः" इति उक्तवान्।

तदा रात्रौ नववादनसमयः। ते सैनिकाः आपणात् बहिः आगतवन्तः।

इदानीं बुभुक्षा पिपासा च तान् बाधते। चौर्येण आहारः सम्पादनीयः इति ते निश्चितवन्तः। एतत्कार्यार्थं सैनिकवेष-धारिणं महाराजम् आदिष्टवन्तः च।

महाराजः झटिति एतदर्थं सिद्धः न अभवत्। तदा ते सैनिकाः महाराजं सम्यक् तर्जितवन्तः, भापितवन्तः, ताडयितुम् उद्युक्ताः अभवन् च। सैनिकानां दुष्टतां निर्दाक्षिण्यप्रवृत्तिं च महाराजः जानाति। अतः अनिवार्यतया सः चौर्यं कृत्वा आहारं सम्पाद्य आगतवान्।

मात्यासमहाराजेन आनीतानि खाद्यानि ते सन्तोषेण खादितवन्तः। अनन्तरं रक्षणकार्यं स्मरन्तः ततः वेगेन धावितवन्तः। ते यद्यपि विलम्बेन गच्छन्ति, किन्तु तान् आक्षेप्तुं कोऽपि न शक्नोति।

प्राचीनसैनिकानां शयनार्थं स्थलं निश्चितम् अस्ति। किन्तु सैनिकवेषधारिणः महाराजस्य तादृशं स्थलं नास्ति। तदा योष्का एव मार्गपार्श्वे कम्बलं प्रसार्य" अत्र शयनं करोतु" इति महाराजम् उक्तवान्।

महाराजः यद्यपि शयनं कृतवान्, किन्तु सः निद्रां न प्राप्तवान्। 'एते सैनिकाः प्राप्तं धनं समग्रं मदिरापानार्थं व्ययीकुर्वन्ति। माम् अवाच्यैः शब्दैः निन्दितवन्तः। चौर्ये मां बलात् नियोजितवन्तः अपि। एतेषां प्रमुखः योष्का निश्चयेन कठोरं दण्डनीयः' इति चिन्तितवान् राजा।

एवं चिन्तयित्वा मात्यासुराजः मध्यरात्रे उत्थाय मौनं स्वभवनं प्रति गतवान्।

प्रातःकाले राजाज्ञा आगता यत् सर्वे सैनिकाः आयुधसहिताः सन्तः राजाङ्गणे सम्मिलेयुः, महाराजः स्वयं सर्वेषां परीक्षां करिष्यति इति। सर्वे सैनिकाः त्वरया राजाङ्गणं प्रति प्रस्थिताः।

'कोऽपि खड्गं दद्यात् वा?' इति योष्का बहुधा प्रयत्नं कृतवान्। सर्वान् प्रार्थितवान्। किन्तु कोऽपि खड्गं न दत्तवान्। अन्ते योष्का एकस्य तक्षकस्य गृहं प्रति धावितवान्। काष्ठमयं खड्गं त्वरया कथञ्चित् कारितवान्। तं कोषे संस्थाप्य सर्वैः सह राजाङ्गणं प्रविष्टवान्।

स्वपुरतः स्थितेषु सैनिकेषु योष्कानामकस्य परिचयं प्राप्तवान् महाराजः। तस्य कटिप्रदेशे खड्गः अस्ति वा न वा इति परीक्षादृष्ट्या दृष्टवान् राजा। तत्र कोषः तु अस्ति। कृतकः त्सरुः स्पष्टं



दृश्यते। 'एतस्य कोषस्थः खड्गः कृतकः इति विषयः सर्वेषां पुरतः एव निरूपणीयः' इति चिन्तितवान् राजा।

महापराधं कृतवन्तं कञ्चन सैनिकं महाराजः कारागारे स्थापितवान् आसीत्। तस्य मरणदण्डनम् अपि निश्चितम् आसीत्। तं महापराधिनम् अत्र आनेतुम् आदिष्टवान् राजा। सः मरणदण्डनार्हः अपराधी सैनिकः भटैः तत्र आनीतः।

मात्यासुराजः योष्कानामकम् अग्रे आहूय आज्ञां कृतवान् "एतस्य शिरच्छेदं करोतु" इति।

योष्कासैनिकस्य पादयोः कम्पनम् उत्पन्नम्। काष्ठमयेन खड्गेन कस्यापि शिरच्छेदः कर्तुं न शक्यते किल? अतः सः विनयेन महाराजम् उक्तवान्– "महाराज! रक्तपातम् अहं द्रष्टुं सर्वथा न शक्नोमि। एतद्विपरीततया चत्वारि वर्षाणि यावत् सैनिककार्यम् अधिकम् आदिशतु, तत् करोमि। मनुष्यस्य शिरच्छेदनं तु सर्वथा न करोमि। एतादृशं कार्यम् अन्यस्मै वक्तव्यम इति विनयेन प्रार्थयामि। क्षन्तव्यः अहम्" इति।

"अहं राजा आज्ञां कुर्वन् अस्मि इति स्मरति खलु। राजाज्ञायाः विरोधः केनापि न करणीयः। करोतु एतस्य शिरच्छेदम्" इति कोपेन गर्जितवान् राजा।

"महाप्रभो! शिरच्छेदं विना...." इति आरब्धं योष्कावचनम् अर्धे स्थगयन् राजा गर्जितवान्– "व्याजं किमपि न वदतु। भवता एव एतस्य शिरच्छेदः करणीयः" इति।

तदा योष्का दीर्घं निःश्वसन् आकाशं पश्यन्– "अये भगवन्! भवति मम भक्तिः नैजा यदि स्यात् तर्हि मम खड्गं काष्ठमयं करोतु, येन हिंसनं निवारितं भवेत्" इति उच्चैः उक्त्वा कोषात् काष्ठमयं खड्गम् आकृष्टवान्। "पश्यतु महाप्रभो! देवः मम प्रार्थनाम् अङ्गीकृतवान्" इति वदन् राज्ञे काष्ठमयं खड्गं प्रदर्शितवान् च।

योष्कासैनिकस्य युक्तिं प्रशंसन् महाराजः तस्य दण्डनविचारं परित्यक्तवान्।





# प्रत्युपकारः

## (५)

'नूतनतया ग्रामम् आगतः सुधाकरः अपायकारी, ततः उपकारं प्राप्य तं न ताडयेम चेत् ग्रामस्य एव अपायः भवेत्' इति ग्रामज्येष्ठौ उक्तवन्तौ किल? तदनुगुणं ग्रामे अपायः प्रवृत्तः एव।

सीतारामनामकस्य गृहे एकदा चौर्यं प्रवृत्तम्। पूर्वदिने सीतारामस्य पत्नी स्वयम् आभरणानि बद्धवती आसीत्। अनन्तरदिने नदीं गत्वा स्नात्वा आगत्य यदा दृष्टवती तदा आभरणबन्धः न आसीत्।

सुधाकरः एतां वार्तां श्रुत्वा सीतारामस्य गृहं गतवान्। समग्रं परिसरं सुसूक्ष्मं परिशीलितवान्। सर्वान् अपि विविध-विषयेषु पृष्टवान्। अनन्तरं गृहे सर्वत्र जागरूकतया अटितवान्। एकत्र कोणे विशालरन्ध्रं दृष्टम्। तत् रन्ध्रम् इतोऽपि विशालीकृतम्। तदा तेन तस्य अन्तः आभरणग्रन्थिः दृष्टः। खाद्यस्य आशया मूषकेन बन्धः आकृष्य नीतः आसीत्। यतः आभरणानि तैलमयेन प्राचीनवस्त्रेण बद्धानि आसन्।

उपकारस्य प्रतिक्रियारूपेण सीतारामेण सुधाकरः कशया ताडनीयः आसीत्। किन्तु सीतारामः तथा न कृतवान्। "सुधाकरः न ताडितः चेत् किं भवेत् इति द्रष्टव्यम्" इति तस्य विचारः।

तद्दिने रात्रौ ग्रामज्येष्ठौ रहसि गत्वा सीतारामस्य क्षेत्रे स्थितं धान्यराशिं ज्वालयित्वा आगतवन्तौ।

अनन्तरदिने सीतारामः उच्चैः आक्रन्दनं कृतवान्। ग्रामज्येष्ठयोः गृहं गत्वा प्रवृत्तं निवेदितवान् च।

सीतारामस्य वचनानि श्रुत्वा ज्येष्ठः ग्रामज्येष्ठः उक्तवान्– "एवं किमर्थं वा न



भवेत्? मया पूर्वम् एव उक्तं किल? भवान् सुधाकरं कशाप्रहारैः यत् न दण्डितवान् तस्य परिणामः एषः'' इति।

एषा वार्ता ग्रामीणैः ज्ञाता। ते अतीव भीताः सन्तः ग्रामज्येष्ठयोः गृहम् आगत्य नमस्कृत्य– ''सीतारामस्य परिस्थितिं दृष्टवताम् अस्माकं मनसि विवेकः उदितः। इतःपरम् अस्मासु कोऽपि एवं न व्यवहरति। भवतोः सूचनानुसारेण एव व्यवहरामः वयम्'' इति उक्तवन्तः।

एतां वार्तां श्रुत्वा सुधाकरः ज्येष्ठस्य ग्रामज्येष्ठस्य समीपं गत्वा– ''भोः, एतत् अन्याय्यम्। भवान् एव सीतारामस्य धान्यराशिं नाशितवान् इति अहं जानामि। अतः सीतारामेण या हानिः अनुभूता सा भवद्भ्यां पूरणीया। अन्यथा महती हानिः अनुभोक्तव्या भवेत्'' इति जागरूकता-वचनानि श्रावितवान्।

''भोः, कुतश्चित् आगत्य अस्मान् एव भापयति वा? भवान् यथा वदति तथा न कुर्मः चेत् किं भविष्यति?'' इति कोपेन पृष्ठवान् सः ग्रामज्येष्ठः।

''किं भविष्यति इति भवन्तः एव स्वयं ज्ञास्यन्ति। श्वः आरभ्य भवतां क्षेत्रतः प्रतिदिनम् एकैका धान्यगोणी अदृश्यतां गमिष्यति'' इति उक्त्वा त्वरया ततः निर्गतवान् सुधाकरः।

तद्दिने एव रात्रिसमये ग्रामज्येष्ठस्य गृहे स्थापिता एका धान्यगोणी दग्धा अभवत्। विचित्रं यत् तस्याः पार्श्वे स्थिताः धान्यगोण्यः तथैव आसन्। समीपस्थानि वस्तूनि अपि न दग्धानि।

एतत् दृष्ट्वा ग्रामज्येष्ठौ भीतौ। तौ सुधाकरस्य समीपं गत्वा– ''भोः, भवान् यथा उक्तवान् तथैव प्रवृत्तं खलु? सत्यं वदतु, भवान् कः?'' इति पृष्टवन्तौ।

''अहं यः कोऽपि भवेयं नाम। किन्तु अहं कस्यापि अपकारं न करिष्यामि। भवतोः तु अधिकारलालसा। अधिकारं चालयतां नाम, तत्र मम आक्षेपः नास्ति। भवद्भ्यां कदापि अन्यस्य हानिः न करणीया। तथैव यदा अहम् अन्यस्य साहाय्यं करोमि तदा मां भवन्तौ न निवारयताम् अपि'' इति उक्तवान् सुधाकरः।

"एवं तर्हि आवाभ्यां किं करणीयम् इति भवतः अपेक्षा?" इति पृष्ठवान् कनिष्ठः ग्रामज्येष्ठः।

"सीतारामेण यावती हानिः अनुभूता तावता प्रमाणेन तस्य क्षेत्रे धान्यानि स्थापनीयानि। एतत् कार्यं रहसि प्रचलतु। सीतारामः सूचनीयः यत् मां विंशति-कशाप्रहारैः दण्डयतु इति। एतेन भवतोः प्रभावः अपि रक्षितः भविष्यति। सीतारामस्य नष्टम् अपि पूरितं भविष्यति" इति सूचनां दत्तवान् सुधाकरः।

अन्यम् उपायम् अपश्यन्तौ ग्रामज्येष्ठौ सुधाकरः यथा वदति तथैव आचरितवन्तौ। सीतारामेण अनुगृहीतान् विंशतिं कशाप्रहारान् सन्तोषेण अनुभूतवान् सुधाकरः।

तद्दिने एव ग्रामज्येष्ठौ इतरे यथा न जानीयुः तथा धान्यगोणीः शकटेन नीत्वा सीतारामस्य क्षेत्रे स्थापयित्वा आगतवन्तौ।

एतत् प्रकरणं दृष्ट्वा ग्रामस्य जनाः आश्चर्येण मूकाः अभवन्। पूर्वोक्तप्रसङ्गेन सुधाकरस्य व्यवहारः पूर्वापेक्षया अपि गूढः जातः। ग्रामज्येष्ठयोः प्रभावः तु सहजतया प्रवृद्धः।

ग्रामज्येष्ठयोः पुत्रौ जयः विजयः च सुधाकरस्य विषये गाम्भीर्येण न चिन्तितवन्तौ। तयोः मातापितरौ तदा तदा पुत्रौ सूचयतः– "सुधाकरस्य सहवासः विरोधः वा मास्तु। सः अतीव अपायकारी" इति।



एकदा जयः विजयः च नदीतीरे विहरन्तौ आस्ताम्। तदा काचित् युवतिः जलस्वीकरणार्थं कलशं स्वीकृत्य आगतवती। एतौ ताम् उपहसन्तौ तस्याः हस्ततः कलशं स्वीकृतवन्तौ।

"भोः, समीपे आम्रवृक्षः दृश्यते किल? आम्रफलानि आनीय ददाति चेत् भवत्याः कलशं प्रत्यर्पयावः। अन्यथा कलशं नद्यां क्षिपावः। इतः गन्तुम् अवकाशम् अपि न प्राप्नोति भवती। आवां कौ इति जानाति किल भवती?" इति तां पृष्टवन्तौ तौ।

सा तरुणी किङ्कर्तव्यतामूढा सती खेदपूर्णमुखेन इतस्ततः पश्यन्ती स्थितवती।



तत्सन्दर्भे सुधाकरः तेन मार्गेण आगतवान्। तरुण्याः मुखतः प्रवृत्तं सर्वं श्रुत्वा जयविजयौ सूचितवान्– "भवन्तौ वृक्षस्थानि आम्रफलानि इच्छतः खलु? तानि अहम् आनीय ददामि। भवन्तौ तस्याः कलशं तस्यै यच्छताम्" इति।

"प्रथमम् आम्रफलं हस्ते आगच्छतु। अनन्तरम् एव कलशस्य प्रत्यर्पणम्" इति उक्तवान् जयः।

वस्तुतः तदानीम् आम्रफलानां न समयः। कस्मिंश्चित् अपि वृक्षे आम्रफलं भवितुं न अर्हति। अतः सुधाकरः आम्रफलानि आनेतुं न शक्नोति इति तयोः अभिप्रायः। किन्तु प्रवृत्तम् अन्यत् एव। सुधाकरः अनायासेन अष्ट आम्रफलानि आनीय तयोः हस्ते दत्तवान् एव।

जयविजयौ आश्चर्येण सुधाकरं पृष्टवन्तौ– "इदानीम् आम्राणां समयः न। तथापि भवान् कथम् आम्रफलानि आनीतवान्?" इति।

"यः स्वार्थचिन्तनं किञ्चिदपि अकृत्वा परोपकारार्थम् एव प्रार्थयते तस्मै सर्वे वृक्षाः असमये अपि फलानि यच्छन्ति" इति उक्तवान् सुधाकरः।

"एवं तर्हि समीपस्थं शैलं सम्प्रार्थ्य मणीन् आनेतुं शक्नोति वा भवान्?" इति पृष्टवान् विजयः।

"स च अन्यः विषयः। भवद्भ्याम् आम्रफलानि तु प्राप्तानि खलु? कलशं तस्यै प्रत्यर्पणीयम् इदानीम्" इति उक्तवान् सुधाकरः।

"न प्रत्यर्पयिष्यावः" इति कठोरस्वरेण उक्तवान् जयः।

"भगिनि! भवती भवत्याः कलशं स्वीकृत्य गच्छतु। एतौ किमपि कर्तुं न शक्नुतः इदानीम्" इति तरुणीम् उक्तवान् सुधाकरः।

सा झटिति विजयस्य हस्ते स्थितं कलशम् आकृष्य वेगेन ततः गतवती। तस्याः अवरोधार्थं जयविजयौ प्रयत्नं कृतवन्तौ। किन्तु तौ हस्तपादौ चालयितुम् एव न शक्तवन्तौ। यदा सा दृष्टिपथात् दूरं गता तदा एव तयोः हस्तपादयोः शक्तिः आगता। तौ वक्तुम् अपि समर्थौ जातौ।

"भवान् मान्त्रिकः वा?" इति असमाधानेन पृष्टवान् जयः।

"अहं तु एकम् एव मन्त्रं जानामि। स च परोपकारः" इति उक्तवान् सुधाकरः।

"आवयोः व्यवहारे विघ्नम् आचरतः भवतः कीदृशः एषः परोपकारः?" इति कोपेन पृष्टवान् विजयः।

"यावत् भवन्तौ अन्यान् न पीडयतः तावत् अहं भवतोः विनोदे विघ्नं न आचरामि। किन्तु इतःपरं भवन्तौ यदा परपीडनस्य आरम्भं कुरुतः तदा भवतोः हस्तौ पादौ च न चलतः। जिह्वा अपि निश्चला भविष्यति" इति स्पष्टतया उक्त्वा ततः निर्गतवान् सुधाकरः।

एतदनन्तरं सुधाकरः यथा उक्तवान् तथैव प्रवृत्तम्। एतेन ग्रामस्थानां पीडनं सहजतया न्यूनं जातम्। जयविजयौ सुधाकरम् आक्षिपन्तौ पितरौ सर्वं निवेदितवन्तौ। किन्तु पितरौ तु 'तस्य विरोधसम्पादनं मास्तु' इत्येव हितं बोधितवन्तौ।

'दुष्टकार्याणि न कुर्वः चेत् ग्रामस्थाः आवां हीनदृष्ट्या पश्यन्ति। एतत् अपमानकरं किल?" इति जयविजययोः व्यथा।

सुधाकरस्य विषये तीव्रः द्वेषभावः उत्पन्नः जयविजययोः मनसि। 'यदा सुधाकरः निद्रायां मग्नः भवति तदा सः बद्धव्यः, नद्यां क्षेपणीयः च' इति चिन्तयित्वा तौ प्रयत्नपरौ जातौ। किन्तु विचित्रं यत् यदा तौ सुधाकरस्य गृहं गतवन्तौ तदा ताभ्यां नीता रज्जुः एव तयोः बन्धनम् अकरोत्। यदा तौ वेदनया क्रन्दनं कृतवन्तौ तदा सुधाकरस्य जागरणं जातम्।

सुधाकरः जयविजयौ पश्यन्– "मां वञ्चनया ये बद्धुं प्रयत्नं कुर्वन्ति ते एव बद्धाः भवन्ति। मम अनुमतिं विना कोऽपि मम केशान् अपि कम्पयितुं न शक्नोति" इति उक्त्वा तौ बन्धविमुक्तौ कृतवान्।

जयविजयौ तदानीं किमपि न उक्तवन्तौ। किन्तु 'केनापि प्रयत्नेन एषः सुधाकरः मारणीयः एव' इति भावः तयोः मनसि दृढः एव जातः। (अनुवर्तते)





# मूर्खः ज्योतिषिकः

कस्मिंश्चित् अरण्ये पूर्वं सप्त चोराः आसन्। एकदा ते चौर्यं समाप्य प्रत्यागच्छन्तः आसन्। तत्समये कश्चन ज्योतिषिकः सम्मुखम् आगतवान्। वामनं शरीरं तस्य। खल्वाटस्य तस्य शिरसि अल्पा शिखा। कक्षे व्यजनम्। हस्ते कलशः पञ्चाङ्गं च। ललाटे उदरे इतरत्र च स्फुटतया दृश्यमानाः भस्मरेखाः।

एतस्य ज्योतिषिकस्य वेषभूषादिकं दृष्ट्वा चोराः हसितवन्तः। एतान् सप्त चोरान् अपि नखशिखान्तं दृष्टवान् सः ज्योतिषिकः। 'एते चोराः' इति सः दर्शनमात्रेण एव ज्ञातवान्। 'इदानीम् अहं सङ्कटे पतितः अस्मि। एते मम शिखां गृहणन्तः कलशं स्वायत्ती-कुर्वन्ति चेत् न तत्र आश्चर्यम। एते यत्किमपि कर्तुं समर्थाः' इति चिन्तितवान् ज्योतिषिकः।

इदानीं ज्योतिषिकस्य मनसि कश्चन उपायः स्फुरितः। सः उत्साहं प्रकटयन् चोरान् समीपम् आहूय– "भोः, भवन्तः के इति अहं जानामि। एवं भवन्तः यदा कदापि यत्र कुत्रापि गच्छन्ति चेत् कोऽपि लाभः न भवेत्। अहं पञ्चाङ्गं दृष्ट्वा उत्तमं मुहूर्तं सूचयितुं शक्नोमि। मया यथा उच्यते तथा आचरन्ति चेत् भवन्तः यथेष्टम् ऐश्वर्यं सम्पादयन्ति" इति उक्तवान्।

चोरनायकस्य ज्योतिषे महान् विश्वासः। अतः सः सन्तोषातिरेकेण– "भवान् मुहूर्तं निश्चित्य वदति चेत् वयम् उपकृताः भवेम। इति उक्तवान्।

"अस्तु तावत्" इति उक्त्वा ततः निर्गतवान् ज्योतिषिकः।

एवं ज्योतिषिकः चोरान् मुहूर्तं सूचयति स्म। तदनुगुणं ते चौर्यं कुर्वन्तः यथेष्टं सम्पादयन्ति स्म। प्राप्ते धने दश नाणकानि ज्योतिषिकाय गुरुदक्षिणारूपेण समर्पयन्ति

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

स्म। एवं ज्योतिषिकस्य अपि अल्पश्रमेण अधिकलाभः। अतः तेषां मध्ये मैत्री प्रवृद्धा।

एवम् एव दिनानि अतीतानि। एकदा ज्योतिषिकस्य मनसि कश्चन विचारः उत्पन्नः। "एते गुरुदक्षिणारूपेण यत् यच्छन्ति तत् अल्पम् एव। एतदपेक्षया तैः सह चौर्यकार्ये भागं गृह्णामि चेत् अधिकं भागं प्राप्तुं शक्नुयाम्। एतेन सम्पादनेन पुत्रस्य विवाहं सवैभवं निर्वर्तयितुं शक्नोमि। प्रयत्नेन विना धनं न लभ्यते। अतः अहम् अपि तैः सह गमिष्यामि" इति चिन्तितवान् सः।



स्वकीयाम् इच्छां चोरनायकाय निवेद्य– "भवद्भिः सह अहम् अपि आगमिष्यामि। प्राप्ते ऐश्वर्ये मह्यम् अपि कश्चन भागः भवतु" इति उक्तवान् ज्योतिषिकः।

तदा चोरनायकः विनयेन उक्तवान्– "आचार्य! भवतः किमर्थं चौर्यश्रमः? भवता चौर्यार्थं न आगन्तव्यम्। चौर्यं दुष्टकार्यम् इति वयं जानीमः। वयं तु पूर्वजन्मनः पापवशात् चौर्यं कुर्मः। सज्जनस्य भवतः किमर्थं तत्र प्रवृत्तिः? पुत्रस्य विवाहार्थं वयम् एव सहस्रं सुवर्णनाणकानि समर्पयामः। पुत्रविवाहः सवैभवं प्रचलतु" इति।

ज्योतिषिकः एतत् निराकुर्वन् पञ्चाङ्गं दृष्ट्वा मन्दहासं प्रकटयन्– "श्वः एकादश्यां तिथौ उत्तमः मुहूर्तः अस्ति। द्वादशवादनानन्तरं द्विवादनतः पूर्वं कार्यं समापनीयम्। अहम् अपि भवद्भिः सह आगमिष्यामि" इति उक्तवान्।

चोरनायकः ज्योतिषिकस्य आगमनं निवारयितुं बहुधा प्रयत्नं कृतवान्। 'यथेष्टम् ऐश्वर्यम् आनीय समर्पयामि' इति उक्तवान् अपि। तथापि ज्योतिषिकः न अङ्गीकृतवान्। चोरैः सह प्रयाणम् आरब्धवान् एव।

निश्चिते समये कौमुदीमय्यां रात्रौ सप्त चोराः ज्योतिषिकः च उत्तरदिशम् अनुसृतवन्तः। धनिकस्य रङ्गनाथस्य गृहं लुण्ठयितुं निश्चितवन्तः च।

भित्तौ रन्ध्रं कृत्वा सर्वे अन्तः प्रविष्टवन्तः। चोराः जागरूकतया इतस्ततः गच्छन्तः यथेष्टं धनम् आभरणानि च सङ्गृहीतवन्तः।

तद्दिने एकादशा खलु? अतः रङ्गनाथस्य गृहे सर्वे उपवासम् आचरितवन्तः आसन्। 'अनन्तरदिने द्वादश्यां प्रातः एव द्वादशीपारणा करणीया' इति पाकवस्तूनि सर्वाणि सज्जीकृत्य स्थापितवन्तः आसन् गृहसदस्याः। ज्योतिषिकः गृहे अटन् एतत्सर्व दृष्टवान्। भूरिभोजनं स्मरन् पाकं कर्तुम् आरब्धवान् च।

किञ्चित्कालानन्तरं चोराः अमूल्य-वस्तूनि अन्विष्यन्तः यदा पाकशालाम् आगतवन्तः तदा ज्योतिषिकः तान् दृष्ट्वा आतङ्केन संज्ञापूर्वकं सूचितवान्– "अग्रे न आगच्छन्तु। पावित्र्यं नश्यति" इति।

तदा चोराः मन्दस्वरेण सूचितवन्तः– "आचार्य! आगच्छतु। चौर्यार्थम् आगताः वयं, न तु भोजनार्थम्। यावच्छीघ्रम् इतः बहिः गन्तव्यम् अस्माभिः" इति।

"तिष्ठन्तु भोः! अहं जानामि, द्विवादनतः पूर्वम् इतः गतं चेत् पर्याप्तम्। तावत् कोऽपि अपायः न भवति। पाकः सिद्धः इव। भोजनं कृत्वा एव गच्छेम। उपविशन्तु" इति साग्रहम् उक्तवान् ज्योतिषिकः।

पूजार्हस्य ज्योतिषिकस्य वचनं तिरस्कर्तुं न शक्तवन्तः ते चोराः। अतः मौनं स्थितवन्तः। भोजनार्थं कदलीपत्रम् अन्वेष्टुं गतः ज्योतिषिकः पूजामन्दिरं प्रविष्टवान्। 'नैवेद्यम् अकृत्वा भोजनं कथं वा कर्तुं शक्येत?' इति चिन्तयन् सः त्वरया पूजाम् आरब्धवान्। तत्सन्दर्भे अजागरूकतया घण्टानादं कृतवान् च।

घण्टानादं श्रुत्वा गृहसदस्याः सर्वे जागरणं प्राप्तवन्तः। चोरान् दृष्ट्वा प्रवृत्तं सर्व तर्कयित्वा प्रथमं चोरान् बद्धवन्तः। अनन्तरं कोपेन ज्योतिषिकं पृष्टवन्तः च– "किं भोः, कः भवान्? किम् एतत् सर्वम्?" इति।

मुग्धः ज्योतिषिकः प्रवृत्तं सर्व निवेदितवान्। तत् श्रुत्वा ज्योतिषिकस्य मूर्खतां स्मृत्वा हसन् गृहस्वामी– "कीदृशः मूर्खः भवान्! चौर्यम् एव दोषाय! चौर्यसन्दर्भे अपि भोजनेच्छा! तत्रापि पूजायां घण्टानादः!!" इति वदन् दश नाणकानि दत्त्वा ज्योतिषिकं प्रेषितवान् च।



# प्रकृतिवैचित्र्याणि



## रुचिकर: आहार:

समुद्रवासी बर्राकुडा अतीव अपायकारी जलचर:। तथापि एतस्य मुखं प्रवेष्टुं लघुजन्तूनां मुक्त: अवकाश:। ते जन्तव: एतस्य मुखं प्रविश्य दन्तानां मध्ये स्थितान् अणुजीविन: (बेक्टिरिया) यथेष्टं खादन्ति।

## दार्वाघाट:

दार्वाघाटपक्षिण: जिह्वा अतीव दीर्घा। दृढानि अस्थीनि, चलनशीला: खण्डा: च एतां जिह्वां परित: भवन्ति। यदा आवश्यकं तदा जिह्वां बहि: सुदीर्घं प्रसार्य एष: कीटं गृहीत्वा गिलति।



## वृश्चिकजातीय: कर्कटक:!



अश्वशफाकारक: कर्कटक: (हार्स शू क्राब्) इति आहूयमान: जन्तु: वस्तुत: न कर्कटककुलोत्पन्न:। सामान्यत: ३७० दशलक्ष (मिलियन)वर्षेभ्य: पूर्वं स्थितानां वृश्चिकानां जातौ जात: जन्तु: एष:।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अवधानम्– | Attention |
| असिधारा– | The sharp edge of a sword |
| अस्थि– | Bone |
| आवुत्तः– | Brother-in-law |
| आसन्नः– | Nearing |
| उलूकः– | Owl |
| कक्षः– | Armpit |
| कटः– | Mat |
| कर्कटकः– | Crab |
| कलशः– | Vessel |
| काष्ठम्– | Wood |
| खल्वाटः– | Bald-head |
| गृध्रः– | Eagle |
| चयनम्– | Selection |
| जामाता– | Son-in-law |
| तक्षकः– | Carpenter |
| त्सरुः– | Hilt of a sword |
| दार्वाघाटः– | Woodpecker |
| धूमशकटः– | Train |
| निर्वर्तयति– | Accomplishes |
| पङ्गुः– | Lame man |
| पदवी– | Attainment |
| परिखा– | Moat |
| पाचकः– | Cook |
| पाञ्चालिका– | Doll |
| भल्लूकः– | Bear |
| भषणम्– | Barking |
| मितव्ययः– | Economy |
| विपणिः– | Market |
| वृश्चिकः– | Scorpion |
| व्यजनम्– | Fan |
| व्याजः– | Pretext |
| शफः– | Hoof |
| शिखा– | Tuft of hair on the head |
| स्थालिका– | plate |

* * * * *

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

### विजितां शीर्षिकां सप्टम्बर् -८७ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

### 'मे' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **देवम् अनुकरोति बालः।**

द्वितीयचित्रम् – **लोकम् अनुसरति देवः।**

प्रेषिका – नतना, द्वारा/पै स्टोर्स्, मैन् बस्स्टेण्ड्, सागर – ५७७४०१ कर्णाटकम्

---

### क्षाम्यन्तु भवन्तः

गते अङ्के (जून्-८७) अस्मिन् एव पृष्ठे 'एप्रिल्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः प्रकटनीयः आसीत् । प्रमाद वशात् मुद्रणसमये स च विषयः परित्यक्तः अभवत् ।

'एप्रिल्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - वेगं विना गाम्भीर्यम् । द्वितीयचित्रम् - वेगः, विना गाम्भीर्यम् ।

प्रेषकः- के. रङ्गस्वामी, ४७, मरियप्पनगरम्, अण्णामलैनगरम् - ६०८ ००२

एतल्लोपार्थं क्षमां प्रार्थयामहे । —सम्पादकः

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# सुरेशः अपघाते व्रणितः

गोपालः-अम्ब, श्रुतवती वा? सुरेशः अपघाते व्रणितः इति श्रुतम् !

Mother, I heard Suresh was wounded in an accident. You know it?

माता-सुरेशः? सुरेखायाः पतिः?

Who! Suresh, Surekha's husband?

गो-आं, स एव । अद्य मध्याह्ने अपघातः सञ्जातः

Yes, the same man. The accident occured this afternoon.

मा-कथं कुत्र अपघातः सञ्जातः? भवते कः वार्तां निवेदितवान् ।

How and where did the accident occur? Who gave you this news?

गो-सुभाषवृत्तसमीपे इति श्रुतम् । एषः स्कूटर् यानेन गच्छन् आसीत् ।
रिक्षाचालकः वेगेन आगच्छन् घट्टनम् अकरोत् । श्रीहरिः दूरवाण्या मह्यं सूचितवान् ।

I was told it happened near Subash circle, when this man was going on a scooter. An Auto driver came fast and dashed against him. Mr. Shrihari rang me up.

मा-अपघातः किं तीव्रतरः वा?

Is it serious?

गो-स्पष्टं न ज्ञायते । पादः भग्नः इति उक्तवान् श्रीहरिः । चिकित्सालयं गत्वा द्रष्टव्यम् ।

Don't know exactly. Shrihari said a leg of his was broken. We have to find out from the Hospital.

मा-कस्मिन् चिकित्सालये प्रवेशितः सः?

In which Hospital has he been admitted?

गो-अश्विनी नर्सिंग् होम् मध्ये अस्ति । अहम् इदानीं तत्रैव प्रस्थितः ।

He is in Ashwini Nursing Home. I am going there now.

मा-अये, तिष्ठतु । काफी पीत्वा खाद्यं किमपि स्वीकृत्य.... ।

Hi, just wait. Eat something, take coffee and go.

गो-अम्ब, इदानीं किमपि मास्तु, गत्वा आगत्य स्वीकरोमि ।

Mother, now I don't want anything. I will have it after come back.

मा-भोः, काफी वा स्वीकृत्य गच्छतु, सिद्धम् अस्ति तत् ।

Hi,take coffee at least and go. It is ready.

गो-तर्हि त्वरया आनयतु ।

Okay, get it soon.

मा-इदानीम् आनयामि । गमनसमये फलानि अपि नयतु ।

I will get it right now. When you go, take some fruits with you.



केवल खिलौने कॉमिक्स और
रवि को चाहिए कुछ और
खुद ही सोचे, खुद ही बनाए
जिससे तबियत खुश हो जाए
एको पेन सेट उसने उठाया,
घर के ऊपर मोर बनाया,
डैडी की मूंछें, एक शिकारी
एक कबूतर, एक भिखारी.
एको हरे और एको पीले
लाल और ऑरेंज, भूरे, नीले
काले, बैंगनी, वायलेट, गुलाबी
अब तो स्केच पेन एको ही लें.

# एको
## स्केच पेन रंगों से यारी, मौज-मस्ती तुम्हारी!

प्रिसिज़न राइटिंग पॉइन्ट्स प्रा. लि. १८, सुभाष रोड, विले पारले (पूर्व), बम्बई-४०० ०५७.
फोन : ६०४०३०५, ६०४३५५६.

